(ख) वात्स्यायनन्यायभाष्यम् ।

मैथिलमक्षरम् ।

प्रारम्भवाक्यम् । ॐ नमो महागणेशाय ।

अत ऊर्द्ध्वं प्रमाणादिपरीक्षा सा च विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय इत्यतोऽग्रे विमर्श एव परीक्ष्यते ॥ इत्यादि ।

पुष्पिका । इति वात्स्यायनीये न्यायभाष्ये द्वितीयोऽध्यायः समाप्तः ।

अब्दे लक्षणसेनभूपतिमते वह्निग्रहद्व्यङ्किते
पक्षे सौम्यसुधानिधौ प्रतिपदि .. ।
.. .. .. .. ..
.. .. .. .. .. ॥

(ग) मन्थानभैरवम् । वा श्रीमतोत्तरम् ।

( खण्डितान्तम् । ) अक्षर – नेवारी ।

प्रारम्भवाक्यम् । ॐ श्रीनाथपादुकेभ्यो (?) नमः ।

अथातः सम्प्रवक्ष्यामि पूजा-सूत्रस्य निर्णयम् ।
येन विज्ञातमात्रेण दिव्याम्नायं प्रवर्त्तते ॥
आदौ स्नात्वा शुचिर्भूत्वा वन्दे सन्ध्यामनुक्रमात् ।
सन्तर्प्य विधिवद्देवान् पितॄणां तदनन्तरम् ॥
गायत्रीन्तु जपेत् पश्चा .. पूजाविधानतः ।
बाह्यकर्म्म तु निर्वर्त्त्य गत्वा यागस्य मन्दिरम् ॥
प्रोक्षयेद् द्वारदेशं तद् यथाविहित .. .. ॥ इत्यादि ।

पुष्पिकाः, – इत्याद्यावतारे कादिमते पूजापद्धतिसूत्रम् ।
इति चतुर्विंशतिसाहस्रे न्याससूत्रम् ।
इत्याद्यावतारे महामन्थानभैरवयज्ञे श्रीचतुर्विंशतिसाहस्रे शक्त्यवतार-सूत्रम् ।
इत्याद्यावतारे श्रीचतुर्विंशतिसाहस्रे दशौघनित्यक्रमसूत्रम् ।
„ „ द्वादशौघनित्यक्रमसूत्रम् ।
„ „ षोडशौघनित्यक्रमयं समाप्तम् । (?)

इत्याद्यावतारे महामन्थानभैरवयजे श्रीचतुर्विंशतिसाहस्रे संहितायां महा .... पूजासूत्राधिकारो नामानन्दः । इत्यादयः ।

(घ) संहितापाठः ।

(शुक्लयजुर्व्वेदीयः ।) अक्षर – नेवारी ।

प्रारम्भवाक्यम् । इषेत्वोर्जेत्वा वायवस्थ देवो वः सविता । इत्यादि ।

अन्तवाक्यम् । शाक संवत्सरे १३५० श्रीभक्तग्रामपट्टने राजाधिराजपरमेश्वर-श्रीश्रीजयजक्षमल्लदेवस्य विजयराज्ये लिखितः श्रीधौरानन्दैः ।

८०२

(क) अमरकोषटीका ।

वृहस्पतिना रचिता ।

(अव्ययवर्गमात्रस्य ।) मैथिलमक्षरम् । १२ पत्राणि ।

(ख) अमरकोषटीका ।

ब्रह्मवर्गादि-खण्डितशूद्रवर्गान्ता । श्रीकरेण रचिता । १४१ – २७९ पत्राणि ।

पुष्पिका । इति मिथिलामहीमहेन्द्रसमस्तप्रक्रियाविराजमानश्रीम ... वरलब्धप्रसादपुण्यावलोकमहाराजाधिराजश्रीमद्रामसिंहदेवानां सदस्य-महामहोपाध्यायश्रीश्रीकरविरचितायाममरकोषविवरणटीकायां व्याख्यामृताभिधानायां भूकाण्डे .. विवरणं समाप्तम् ।

अपराः पुष्पिकाः, – इति व्याख्यामृते ब्रह्मवर्गविवरणम् ।

„ „ क्षत्रियवर्गविवरणम् ।

„ „ वैश्यवर्गविवरणम् ।

(ग) अमरकोषः ।

अक्षर – नेवारी । (खण्डितान्तः ।)

८०३

(क) अमरकोषः ।

(ख) अमरकोषटीका ।

(खण्डिता ।) श्रीकरेण रायमुकुटेन च रचिता ।

८४५

(क) कूर्मपुराणम् ।

नागराक्षरलिखितम् । ५०० पत्राणि ।

पुष्पिका । इति कूर्मपुराणे षट्साहस्त्रिकायां संहितायामुपरिभागे त्रिचत्वारिंशो-ऽध्यायः । समाप्तमिदं कौर्म्मं पुराणम् । ॐ नमः ।

(ख) वृहन्नारदीयपुराणम् ।

मैथिलाक्षरलिखितम् । १७५ पत्राणि ।

पुष्पिका । इति वृहन्नारदीये त्रिंशत्तमोऽध्यायः । ( ततः पत्रद्वयमस्ति । )

(ग) विश्वनाथप्रकाशः ।

४४७ पत्राणि । मैथिलमक्षरम् ।

प्रारम्भवाक्यम् । .. .. .. .. ..

क्वाथः कृतः पुष्कर-मातुलुङ्ग-पलाशपूतीकशटी + + + + ।
सनागराजाजिवचाजवानां
संस्कार-उष्णो लवनश्च पेयः ॥

इत्यादि ।

अन्तवाक्यम् । स्वेदश्च रोमकूपेभ्यो यस्य रक्तं प्रवर्त्तते ।
पुरुषस्य विपार्त्तस्य सद्यो जह्यात् स जीवितम् ॥

इति विश्वनाथप्रकाशे निदानरसकर्म्मविपाकाख्ये अरिष्टकालज्ञानादि-निरूपणाध्यायः ॥ (अतःपरमपि सन्ति सप्त पत्राणि तत्र पुष्पिकाभावा-दसावेवाध्यायः शेषवाक्यत्वेन गृहीतः ।)

पुष्पिकाः,– इति ० तरोग्रह (?) हृद्रोगचिकित्साधिकारः समाप्तः ।
इति ० मूत्रकृच्छ्रचिकित्साधिकारः समाप्तः ।
इति ० मूत्राघातचिकित्साधिकारः समाप्तः ।
इति ० अश्मरीचिकित्साधिकारः समाप्तः ।
इति ० शोथचिकित्साधिकारः समाप्तः ।
इति ० अन्त्रवृद्ध्यधिकारः समाप्तः ।
इति ० गण्डापचौ गलगण्डमालाग्रन्थ्यर्व्वुदचिकित्साधिकारः समाप्तः ।
इति ० बालरोगचिकित्साधिकारः समाप्तः ।

इति ० रसायनाधिकारः समाप्तः ।

इति ० इद्रोगचिकित्साधिकारः समाप्तः । इत्याशयः ।

८६०

(क) भागवतम् ।

( खण्डित-प्रथमस्कन्धात्-खण्डितदशमस्कन्धपर्य्यन्तम् । )

५१८ पत्राणि । मैथिलमक्षरम् ।

८६७

महाभारतम् ।

( शान्तिपर्व्वमात्रम् । ) मैथिलमक्षरम् ।

पुष्पिका । लसं ४१२ कार्त्तिकशुक्लषष्ठ्यां गुरौ दिने कृष्णपक्षीग्रामे परमभागवत-सर्व्वादाषिन्धुठक्कुरश्रीमखाय (?) महाशयानामाज्ञया .. .. लिखित-मिदं मोक्षधर्म्मपुस्तकमिति । सम्वत १६७ पौषशुक्लद्वितीय-पञ्चम्यां तिथौ ए दिने महाराजाधिराज-श्रीश्रीजयप्रतापमल्लदेवेन राजधर्म्ममोक्ष-धर्म्मपारायणा .. .. .. कृतः । पञ्चदशदिनाभ्यन्तरे सम्पूर्णः कृतः ।

८६८

महाभारतम् ।

( उद्योगपर्व्वमात्रम् । ) मैथिलमक्षरम् । लसं ४२२ ।

८७१

शिवपुराणम् ।

( खण्डितम् । ) मैथिलमक्षरम् ।

९१०

(क) वृहन्नारदीयपुराणम् ।

मैथिलमक्षरम् । लसं ४२९ ।

(ख) हरिवंशम् ।

अक्षर – नेवारी । संवत् २५७ ( आदराख्याङ्कानि । )

(ग) दानवाक्यावली ।

मैथिलमक्षरम् । लसं ५१२ ।

(घ) महालक्ष्मीव्रतमाहात्म्यव्याख्यानम् ।

(ङ) पौर्णमासीव्रतकथा ।

(च) विष्णुपुराणम् ।
( षष्ठ-अंशपर्य्यन्तम् । )

(छ) विष्णुपुराणम् ।
अवशिष्टांशात्मकम् । ( खण्डितम् । )

८३२

(क) खण्डखाद्यटीका ।
६६ पत्राणि । अक्षर – नेवारी ।

प्रारम्भवाक्यम् । ॐ नमः श्रीसूर्य्याय ।
खण्डखाद्यकस्य स्पष्टपदां टीकां वक्ष्यामि । आदौ तावत्सर्व्वैः स्वमण्डल-युक्तसंवत्सरेण शककालः साधनीयः । पश्चात्तु यथोक्तं खण्डखाद्यकेन तथा क्रमः कर्त्तव्यः । नेपालमण्डले शककालसाधनं प्रदृश्यते । सूत्रमिदं,-
नेपालसंख्यं नयनाश्वनागा –
वर्षं क्षिपेदेष शकाब्दकाल इति ।
नयनाश्वनागाः ८०२ तेषु वर्त्तमानसंवत्सरं योजयेदयं – शककालो भवति । इत्यादि ।

(ख) विवाहकर्म्मसमुच्चयः ।
१० पत्राणि । अक्षर – नेवारी ।

प्रारम्भवाक्यम् । लीलावलोकनपरस्परदृष्टिपाते-
रालिङ्गिताङ्गपुलकाञ्चितशङ्करस्य ।
देव्या सदैव चरणौ प्रणिपत्य सम्यक्
स्त्रीणां विवाहसमयस्य विधिं प्रवक्ष्ये ॥

अन्तवाक्यम् । इति विवाहकर्म्मसमुच्चयः समाप्तः । संवत् २३३ ( आक्षराण्यङ्कानि । ) आश्विन शुक्लनवम्यां बुधदिने लिखितमिति ।

(ग) वराहमिहिरसंहिता ।
११७ पत्राणि । अक्षर – नेवारी ।

प्रारम्भवाक्यम् ।     नमः सूर्य्याय ।

अज्ञातमध्यान्तसमुद्भवाय
सर्व्वात्मने सर्व्वगताय चैव ।
प्रणम्य दैवाय मनोभवाय
खलीकृतं येन जगत् समस्तम् ॥
प्रजापतिर्मन्मथ एव यस्मात्
कामं विना न प्रभवः प्रजानाम् ।
महत्सु सूक्ष्मेषु च नास्ति दैवः
सर्व्वात्मगः सर्व्वगतः स यस्मात् ॥
तस्मात् परं नापरमस्ति किञ्चित्
सौख्यान्महत्त्वाच्च मतञ्च नान्यत् ।
तेनेदमेकेन मनोभवेन
व्याप्तं जगत् .. स्तेन सर्व्वम् ॥
अगम्यगामी भगवान् प्रजेशः
योषीसहस्राद्वृतनुश्च शक्रः ।
चतुर्मुखो येन कृतश्च शम्भुः
स मन्मथो मङ्गलमादधातु ॥
अथ भगवानपि
( शार्ङ्ग ) शार्ङ्गधरो भगवत ..
.. .. .. .. .. .. .. ।
बहवोऽस्य भगा इति तेन कृतं
भगवानिति नाम जगत्प्रसिद्धम् ॥
सीतावियोगेन बहूनि दुःखा-
न्याप्तानि रामेण मलप्रयेन ।
संस्मृत्य तानीह कलौ सहस्रा-
ण्यष्टौ .. .. .. विवाहितानि ॥
दुर्भगास्तनयवर्जिताश्च य-
न्निवसन्ति वनिताः पतिव्रताः ।

तत्तदेव विनिपातयन्ति ता-
मन्यजन्मजनितैश्च दुष्कृतैः ॥
सुरभिकुसुमगन्धैस्तर्पयित्वा द्विजेन्द्रान्
शुभतिथिकरधर्क्षे देववित् संप्रतिष्ठा ।
उभयकुल .. .. .. .. .. मश्चये
प्रथमवयसि दद्यात् कन्यकां यौवनस्थां ॥ इत्यादि ।

अन्तवाक्यम् । आर्य्यवराहमिहिरस्य कृतौ संहितायां । ठिकनिके(?) नाम यात्रायां समाप्तः । संवत् २३० (श्रात्तराख्यङ्कानि) २ कार्त्तिक शुदि ।

९७४

भागवतदशमस्कन्धटीका ।

(भावार्थदीपिका) श्रीधरस्वामिना रचिता । १२० पत्राणि ।•
मैथिलमक्षरम् ।

अन्तवाक्यम् । लसं ४७२ कार्त्तिक शुदि ३ रवौ दिने कोरैणीग्रामे सन्मिश्रश्रीनारायणेन .. .. .. .. .. पाठार्थं लिखितमिदं पुस्तकम् ।

९७६

भागवतपुराणम् ।

२६० पत्राणि ।

अन्तवाक्यम् । समाप्तश्चायं द्वादशस्कन्धः ।
स राजते श्रीजयप्राणमल्लो
विपक्षरामाहृदि तापकारी ।
स्वसुन्दरीणां हृदि तापहारी
शत्रून् विजित्वा वरराज्यधारी ॥
तस्य विजयराज्ये ।
भावसिंहसुतः श्रीमान् विष्णुसिंहो विराजते ।
सेवकानां क्षेमकारः सज्जनानां दयाकरः ॥
तस्यार्थमलिखत् पुण्यं श्रीकृष्णचरितं शुभम् ।
हरिवर्म्मः प्रवीणोऽसौ दैवज्ञकुलचन्द्रमाः ॥

(?) कौर्य्यिलेयाग्निशाम्येऽब्दे (शाम्येऽब्दे) याते माघि जनेतरे।
पञ्चम्यामर्कभर्त्तऽह्नि लिपिपूर्णं तदाभवत्॥ (?)
श्रीभागवतं सम्पूर्णम्।

१००१

(क) विष्णुपुराणम्।
मैथिलाक्षरम्।

(ख) महाभारतस्यादिविराटपर्व्वटीका।
खण्डिता।

(ग) हरिवंशटीका।
खण्डिता। शाके १५३०।

(घ) बृहन्नारदीयपुराणम्।
मैथिलाक्षरम्। लसं ४२५।

(ङ) रामायणम्।
(सुन्दरकाण्डः।) मैथिलाक्षरम्। लसं ३७३।

(च) महाभारतम्।
(शान्तिपर्व्वमात्रम्।) खण्डितम्। मैथिलाक्षरम्।

(छ) रामायणम्।
(उत्तरकाण्डः।) मैथिलाक्षरम्। लसं ३०४।

(ज) नारसिंहपुराणम्।
१६२ पत्राणि। मैथिलाक्षरम्।

अन्तवाक्यम्। लसं ३३९। श्रावणशुदि षष्ठां रविवासरे महाराजाधिराजश्रीमन्मदनसिंहदेवानां विजयिनां शासति गोरक्षपुरे सिपाहकटके सदुपाध्यायश्रीरुचिनाथशर्म्मभिर्नारसिंहाख्यमदः पुराणमलेखि। श्रीगोपीजनवल्लभप्रसादादिति।

१००२

(क) विष्णुधर्म्मः।
अक्षर – नेवारी। संवत् १६७। (आद्यराण्यङ्कानि।)

अन्तवाक्यम् । आश्विन कृष्णषष्ठ्यां बुद्ध(बुध)दिने परमभट्टारकमहाराजाधिराजपरमेश्वरश्रीमद्भास्करदेवस्य राज्ये श्रीदक्षिणपत्तिमको वास्तव्ये श्रीलक्ष्मीधरदर्शनस्य देयधर्म्मोऽयन्तस्य भार्य्यातिलक .. ..॥

(ख) विष्णुधर्म्मः ।

अक्षर – नेवारी ।

अन्तवाक्यम् । इति विष्णुधर्म्मेषु शास्त्रमाहात्म्यं परमामृतं धर्म्मोत्तमं परिसमाप्तमिति ।

१००३

एकादशीव्रतमाहात्म्यम् ।

अक्षर – नेवारी ।

अन्तवाक्यम् । नेपालसंवत्सरहरेक्षणबाणभूते
वैशाखपक्षसितविंशतिथौ च हस्ते ।
.. .. .. .. ..
.. .. .. .. ..॥

१०७६

(क) न्यायरत्नाकरः ।

श्रीचन्द्रेण रचितः । मैथिलमक्षरम् ।

एकादशाद्यधिकरणम् ।

श्रीमुरारिमिश्रेण रचितम् । ९ पत्राणि । मैथिलमक्षरम् ।

प्रारम्भवाक्यम् । ॐ नमः शिवाय । प्रयोजनाभिसन्धानत्वात् वाधाभ्युच्चयलक्षणं वृत्तं तन्मावापलक्षणं वर्त्तयिष्यामः ।

अन्तवाक्यम् । यथाप्रतिकरणं भेदेप्येक एवोपकार इति ।

पुष्पिका । इति मिश्रमहामहोपाध्यायश्रीमुरारिकृतौ एकादशाद्यधिकरणं समाप्तमिति । महामहोपाध्यायश्रीरत्नाकरात्मजेन वाग्देवताराधनपरेण श्रीहरिकरेण लिखितमिदं पुस्तकम् ।

(ख) रूपसाधनम् ।

सुभूतिचन्द्रेण रचितम् । विवरणं प्रदत्तम् ।

(ग) रघुवंशटीका ।

शोभनाभिधा । षष्ठसर्गपर्य्यन्ता । अक्षर – नेवारी ।

(घ) चान्द्रव्याकरणम् ।

खण्डितम् । अक्षर – नेवारी । संवत् ४४१ ।

(ङ) उष्मभेदः ।

अक्षर – नेवारी । संवत् ४४१ ।

(च) श्रुतबोधः ।

अक्षर – नेवारी । ( खण्डितः । )

(छ) दशकर्म्मपद्धतिः ।

३५ पत्राणि । अक्षर – नेवारी ।

प्रारम्भवाक्यम् । ॐ नमो बुद्धाय । (?) अथ गर्भाधानकर्म्म ।

अन्तवाक्यम् । विवाहचतुर्थीहोमः समाप्तः ।

संवत् ५८३ । श्रीश्रीमहाराजाधिराजपरमेश्वरपरमभट्टारकश्रीजयसिंह नाम .. .. ।

(ज) तात्पर्य्यपरिशुद्धिः ।

उदयनेन रचिता । ५७ पत्राणि । मैथिलमक्षरम् ।

अन्तवाक्यम् । इति श्रीमदुदयनकृतौ द्वितीयोऽध्यायः समाप्तः । लसं ३३९ । वसुकाग्रामे भाद्रशुदि षष्ठ्यां कुजे महुपाध्यायश्रीलक्ष्मीपतीनामाज्ञया श्रीजटाधरेण लिखितमिदं पुस्तकमिति । शुभमस्तु ।

(झ) ताराहस्यवृत्तिका ।

शङ्करेण रचिता । मैथिलमक्षरम् । लसं ५११ ।

(ञ) प्रक्रियाकौमुदी ।

( द्विरुक्ति प्रक्रियापर्य्यन्ता । ) रामचन्द्रभट्टेन रचिता । लसं ५५८ ।

(ट) मेघदूतम् ।

१-८ श्लोका न सन्ति । अक्षर – नेवारी ।

अन्तवाक्यम् । श्रेयोऽस्तु संवत् ४८४ कार्त्तिकशुक्लपूर्णिमायां तिथौ । भरणिनक्षत्रम् । व्यतीपातयोगे । सोमवारे । श्रीराजाधिराजपरमेश्वरः श्रीश्रीजयार्जुनदेवस्य विजयराज्ये .. .. .. । श्लोकसंख्या ११० ।

१०७७

(क) स्मृतिपरिभाषा ।

वर्द्धमानेन रचिता । मैथिलमक्षरम् ।

लसं ३८८ । श्रावण कृष्णैकादश्यां शुक्रे नार्चौंसग्रामे श्रीपद्मकरमाधवशर्मभ्यां लिखितमिदं पुस्तकमिति ।

(ख) दशक्रियाविधिः ।

खण्डितः । ३५ पत्राणि । अक्षर – नेवारी ।

प्रारम्भवाक्यम् । ॐ नमो ब्रह्मणे नमः । अथ दशक्रियाविधिः । तत्रादौ विवाहः । चन्द्रतारानुकूले भद्रकदिने कन्याधाता अन्यो वा ब्राह्मणो वरस्य गृहं गच्छेत् । ततो वरस्याचरितमङ्गनस्य (मङ्गलस्य) प्राङ्मुखोपविष्टस्याग्रतः कन्याधाता उत्तराभिमुखोपविष्टः तस्मिन् काले अग्निसान्निधे "खाता खातेद्धरोगिणि अव्यङ्गि अपतिते अक्लीवे पिता तुभ्यं प्रदास्यति।" इमं श्लोकं पठित्वा फलशोभनं वरहस्ते दद्यात् । इत्यादि ।

(ग) भागवतम् ।

दशमस्कन्धस्य कतिपयानि पत्राणि । वङ्गीयमक्षरम् ।

(घ) वामकेश्वरीस्तुतिन्यासपूजाविधयः ।

वत्सराजेन रचिताः । अक्षर – नेवारी ।

पुष्पिकाः ।

४ पत्रे । इति श्रीमहाराजाधिराजविद्याधरचक्रवर्त्तिवत्सराजविरचिता श्रीवामकेश्वरीस्तुतिः समाप्ता ।

८ पत्रे । इति न्यासविधिः । (पूजाविधिः खण्डितः ।)

(ङ) कार्त्तिकमाहात्म्यम् ।

(स्कन्दपुराणीयम् ।) वङ्गीयमक्षरम् ।

अन्तवाक्यम् । लसं ४४७ । श्रावणवदि ५ चन्द्रवासरे.. ।

(च) हरितालिकाकथा ।

(भविष्योत्तरीया) वङ्गीयमक्षरम् ।

(छ) रसमञ्जरी ।

भानुदत्तेन रचिता । मैथिलमक्षरम् ।

अन्तवाक्यम् । युगाङ्कवेदाङ्कितलक्ष्मणाब्दे
मार्गे च जीवे च वलक्षपक्षे ।
अलेखि पुस्ती रसमञ्जरीयं
नूनं कवि-श्रीयदुनन्दनेन ॥

(ज) कीर्त्तिपताका ।

विद्यापतिना रचिता । (लेखयित्वा सङ्गृहीता ।)

(झ) देवीमाहात्म्यम् ।

अक्षर – नेवारी । संवत् २२९ । (आक्षराण्यङ्कानि ।) कार्त्तिकशुक्ल ।

(ञ) महाभारतम् ।

(स्वर्गारोहणपर्व्वमात्रम् ।) वङ्गाक्षरलिखितम् । लसं ४७५ ।

(ट) संहितापाठः ।

अक्षर – नेवारी । श्लोकास्तु —
× × × × × × ।
ध्रुवोसि ध्रुवोऽयमोमास्मिन्नायतने ॥ २८ (?) ॥
ईळ्कार्त्तारमध्वरस्य प्रचेतसं क्षयन्तरुं भाषसो मह: ।
रातिं वातस्य सुभगां महीमुषदधाषि .. .. ॥ (?) १११ ॥
इत्यादयः ।

(ठ) सरोजकलिका ।

वङ्गाक्षरलिखिता ।
प्रारम्भवाक्यम् । ॐ नमस्तस्मै ।
भास्वता कविरत्नेन प्रयत्नेन स्फुटीकृता ।
सरोजकलिका भाति श्रुतिस्त्रीकर्णभूषणम् ॥
अथ श्राद्धकर्म्मव्यवस्था । इत्यादि ।
(अन्त्यं खण्डितम् ।)

(ड) प्रबोधचन्द्रोदयटीका ।

रुचिकृता । विवरणं प्रदत्तम् ।

(ढ) रुद्राष्टकविधिः ।

(वाजसनेयः ।) अक्षर – नेवारी । संवत् ८४४ ।
.... श्रीराजराजेश्वर-श्रीश्रीजयज्योतिर्मल्लदेवस्य विजयराज्ये ।

१०७८

(क) स्तोत्रसंग्रहः ।

(ख) भैरवानन्दनाटकम् ।

विवरणं प्रदत्तम् ।

(ग) देवामृतपञ्चराचम् ।

विवरणं प्रदत्तम् ।

(घ) कुब्जिकामतम् ।

विवरणं प्रदत्तम् ।

(ङ) भोजदेवसंग्रहः ।

( खण्डितः । ) विवरणं प्रदत्तम् ।

(च) धातुपाठः ।

१०७९

(क) भागवतदशमस्कन्धः ।

अक्षर – नेवारी ।

(ख) रामायणम् ।

( ३-८०६ पत्राणि । ) अक्षर – नेवारी ।

खण्डितादिकाण्डात् खण्डितोत्तरकाण्डपर्य्यन्तम् ।

१११२

(क) निष्पन्नयोगावली ।

अक्षर – नेवारी । ११ पत्राणि ।

प्रारम्भवाक्यम् । ॐ नमो बुद्धाय ।

ज्योतिर्भिर्विजितं यदस्य जगतीजिष्णवन्तरन्धं तमो

यस्माद्वैतदशोल्लसत्यपि परिणामाणुणोघश्रियाम् ।

यत् कारुण्यपरीप्लुतार्द्रहृदय+स्थितं वज्रिणा-

स्तैरेतच्चरिताद्भुतानि विजयी-धामानि धावन्तु वः ॥ ?

वज्रावलीमण्डितमण्डलेषु
द्राग् वज्रभृत्वाद्यचरित्रमुख्यैः ।
उदग्रदुग्रावचनिर्मितो ये-
रमोघ .. श्रियमादधातु ॥

इह हि मृदुमध्यकमाभ्यां सुभावितसमाधेरधिमात्रप्रज्ञस्य भगवतः सर्व्वाकारवरोपेतः स्फुरत् .. .. .. कारकः झटिति ध्याननिष्पन्नो योगी .. .. निष्पन्न उच्यते । इत्यादि ।

ग्रन्तवाक्यम् । समाप्तेयं निष्पन्नयोगावली । कृतिरियं महापण्डिताभयाकरगुप्तपादाना-मिति । संवत् ६८६ भाद्र शुदि नवम्यां तिथौ सोमवासरे लेखनं सम्पूर्णमिति । सिंकोमगुह्वि-वहारवज्राचार्य्य-श्रीरविचन्द्रस्य पुस्तकोऽयम् । स्वार्थेन लिखितमिदम् । शुभमस्तु ।

(ख) योगरत्नसंग्रहः ।

मैथिलमक्षरम् । २४० पत्राणि ।

पुष्पिका । इति श्रीमद्वैद्यश्रीपुरुषोत्तमदत्तविरचितो योगरत्नसङ्ग्रहः समाप्तः ।

रसवसुखगचन्द्रैरङ्किते श्रीशकाब्दे
तपसि विमलपक्षे भूमिजे पूर्णिमायाम् ।
व्यलिखदिह समस्तं पुस्तमेतत् प्रयत्ना-
न्निखिलगुणकदम्बं विष्णु .. .. महष्टः ॥ ॐ नमः ।

श्रीरस्तु । शुभमस्तु । ततो नागराक्षरैण——

"श्रीश्रीसुमतिजयजितामित्रमल्लदेवस्य नर्पुस्तकस्यकाव्यगिरामपरमानप-वेलस (?) संवत् ८१० कार्त्तिक शुदि ९ ॥" एतावल्लिखितमस्ति ।

(ग) द्रव्यकिरणावली ।

उदयनकृता । अक्षर – नेवारी ।

(घ) गणयागविधिः (?)

अक्षर – नेवारी । (खण्डितः ।)

(ङ) खण्डनखण्डखाद्यम् ।

श्रीहर्षकृतम् । मैथिलमक्षरम् । १०९ – २१२ पत्राणि ।

विजलपुरे पण्डित-श्रीवासुदेवेन लिखितं पुस्तकमिदं गतलक्ष्मणसेन-

देवीय-षोड़शोत्तरशततमाब्दे मार्गकृष्णत्रयोदश्यामिति।

... ... ... ... ... ... ... ...॥

लसं ११६ मार्गवदि १३ शुभमस्तु ।

(च) पञ्चरचा ।

अक्षर – नेवारी ।

अन्तवाक्यम् । आर्य्यमहासाहस्रप्रमर्द्दिनी, आर्य्यमहामायूरी, आर्य्यमहाशीलवती, आर्य्यमहाप्रतिसरा, आर्य्यमहामन्त्रानुसारिणी, एतानि पञ्चरक्षासूत्राणि। परिसमाप्ता चेति ।

राजाधिराजपरमेश्वरपरमभट्टारक-श्रीश्रीजयजक्षमल्लदेवस्य विजयराज्ये । श्रेयोऽस्तु । संवत् ५६० । श्रावणशुक्लप्रतिपद्यां तिथौ मघानक्षत्रे परिघयोगे कर्कटराशिं गते सवितरि सिंहराशिं गते चन्द्रमसि ॥

## ११२४

(क) सिद्धिसारसंहिता ।

दुर्गागुप्तपुत्रविष्णुगुप्तकृता । अक्षर – नेवारी । ९५ पत्राणि ।

संवत् मिन-ऋतु श्र × × शु × एकादशी प्र द्वादश्यां तिथौ । (?) ज्येष्ठ प्र मूलनक्षत्रे । गुरुवासरे श्रीमत्-श्रीश्रीराजाधिराज-श्रीश्री × × × × मल्लदेवस्य विजयराज्ये ।

श्रीललितब्रुमाया श्रीमनोजलकेः पन्यिमध्य-श्रीवृवहारवैद्य (?) श्रीजय- × × कोयम्। इदं वैद्यशास्त्रं सिद्धिसारनिघण्टकसमेतं लिखितमिति।

(ख) महादाननिर्णयः ।

वाचस्पतिमिश्रकृतः । मैथिलमक्षरम् । लसं ३९२ । वैशाखवदि १२ चन्द्रे ए दिने समाप्तः ।

(ग) हरिमेखला ।

अक्षर – नेवारी ।

अन्तवाक्यम् । ॐ श्रीहरिमेखला नेपालभाषा नपिकायं पेसं भाठिपिनि सम्पुनजरोः। संवत् ५४१ भाद्रशुक्लतृतीयायां तिथौ हस्तानक्षत्रे शुभयोगे बृहस्पतिवासरे सम्पूर्णमिति शुभमस्तु ।

श्रीश्रीराजाधिराज-परमेश्वर-परमभट्टारक-श्रीश्रीजयज्योतिर्म्मल्लदेवप्रभु-
– – – सिद्धिरस्तु सर्व्वदा ।

(घ) तत्त्वचिन्तामण्यालोकटीका ।
( प्रत्यक्षखण्डम् । )

प्रारम्भवाक्यम् । ॐ नमस्तस्यै ।
कृष्टोत्तरच्छदपटार्द्धकृतान्तराल
मुत्तानमिश्रयित × × × × × × ।
इत्थं स्फुटागमि × × × नूतन ×
× × स्तनोतु × × मौग्धि शिवं शिवायाः ॥
प्रारिप्सितप्रतिबन्धकविघ्नविघाताय कृतं नमस्कारं .. .. .. ..
गुणेति । सत्त्वरजस्तमोलक्षणगुणातीत इत्यर्थः । ...... त्रिगुणसचिवः
स्वानेच्छा ... ... मित्यर्थः । अकाराकारमकारस्वपञ्चचारमयः ॐ कार-
मयं इत्यर्थः । इत्यादि ।

(ङ) सारोत्तरनिर्घण्टः ।
( मध्येन खण्डितः । ) वैद्यकशास्त्रम् । अक्षर – नेवारी ।

प्रारम्भवाक्यम् । ॐ नमो बुद्धाय ।
प्रणम्य जगदुत्पत्तिस्थितिसंहारकारणम् ।
स्वर्गापवर्गयोर्द्वारं त्रैलोक्यशरणं शिवम् ॥
नानामुनीनां वचना .... सतः सद्भिषजां नियोगात् ।
सोपद्रवा .. निदानलिङ्गा निरुप्यते रोगविनिश्चयाय ॥ (?)
नानातन्त्रविहीनानां .. .. मल्पमेधसाम् ।
सुखं विज्ञातु .. .. .. .. .. ॥ इत्यादि ।

अन्तवाक्यम् । इति सारोत्तरं नाम निर्घण्टः समाप्तः ।
अस्य ग्रन्थस्य प्रमाणश्लोकाः १७९ । (आक्षराण्यङ्कानि ।) कृतिराचार्य्यवर्य्य
.. .. लेखति वर्षशतद्वयं यातेन .. .. .. ।

(च) षट्कारकम् ।
मैथिलमक्षरम् । लसं ४७५ ज्येष्ठ शुदि । भौआड़ग्रामे श्रीमुरारिशर्म्मणा
लिखिता पुस्तिकेति ।

(छ) कालोत्तरतन्त्रम् ।
( आदिखण्डितम् । ) अक्षर – नेवारी ।

इति कालोत्तरे त्रयोदशशतिके दशमः पटलः समाप्तः ।

११५२

(क) आख्यातकोषः ।
अक्षर – नेवारी । २३ पत्राणि ।

(ख) कादिमतम् ।
( षोडशनित्यातन्त्रीयम् । ) ५ – १६४ पत्राणि । मैथिलमक्षरम् ।

(ग) प्रश्नोत्तररत्नमालिका ।
अक्षर – नेवारी । १४ पत्राणि ।

(घ) चौरपञ्चाशिका ।
अक्षर – नेवारी ।

(ङ) सुवन्तरत्नाकरः । (?)
मैथिलमक्षरम् ।

प्रारम्भवाक्यम् । ॐ नमो गणेशाय ।
नमः सरस्वतीपादपङ्कजाय हितैषिणे ।
यत्प्रसादाज्जगत् सर्व्वमनु × × सुपजायते ॥
रूढिशब्दा निगद्यन्ते पुंसि षण्ढे स्त्रियामपि ।
गुणद्रव्यक्रियायोगास्त्रिलिङ्गास्तदनन्तरम् ॥
विप्राग्निसखिपत्य + क्रोष्टुप्रतिभू . . . . ।
प्रशस्ता वै गोद्यावौ पुंस्यजन्ताः प्रकीर्त्तिताः ॥ इत्यादि ।

११६५

(क) सूर्य्यसिद्धान्तभाष्यम् ।
मैथिलमक्षरम् । मैथिलवाजपेय-चण्डेश्वराचार्य्यकृतम् ।

११७६

(क) दशकर्म्म ।
अक्षर – नेवारी ।

(ख) भगवद्गीता ।
अक्षर – नेवारी ।

(ग) पूजाविधिः ।
अक्षर – नेवारी ।

(घ) स्तवराजः ।
अक्षर – नेवारी ।

(ङ) मयूरचित्रम् ।

अन्त्यवाक्यम् । स्वस्ति श्रीराजाधिराज-श्रीश्रीजयस्थितिराजमल्लदेवस्य विजयराज्ये लिखितमिदं पुस्तकम् । तस्मिन् समये श्रीजयार्जुननामा राजा त्रिपुरराजसचिवेन प.... महासङ्कटे प्रविशति ।

(च) स्तवराजः ।

(छ) विवाहपद्धतिः ।
( कतिचित्पत्राणि । ) अक्षर – नेवारी ।

११७९

(क) मयूरचित्रम् ।
अक्षर – नेवारी ।

प्रारम्भवाक्यम् । ॐ नमः सर्व्वज्ञाय ।

गर्गं मुनिवरश्रेष्ठं ज्योतिषज्ञानपारगम् ।
अभिवाद्याञ्जलिं कृत्वा भागुरिः परिपृच्छति ॥
भगवन् श्रोतुमिच्छामि दिव्यचक्षुर्महातपम् ।
... ... सुत्तमज्ञानं ज्योतिषज्ञानपारग ॥

इत्यादि ।

पुष्पिकाः,— इति मयूरचित्रे प्रथमोऽध्यायः समाप्तः ।
इति मयूरचित्रे तृतीयोऽध्यायः ।
इति मयूरचित्रे पञ्चमोऽध्यायः ।
इति मयूरचित्रे उत्पातलक्षणे षष्ठोऽध्यायः ।
इति मयूरचित्रे भौम्योपेतलक्षणे (?) सप्तमोऽध्यायः ।
इति मयूरचित्रे अष्टमोऽध्यायः ।

(ख) भगवद्गीता ।
कतिपयानि पत्राणि ।

११८०

(क) यवनजातकम् ।

| | | | |
|---|---|---|---|
| ४ | पत्रे,—इति | यवनजातके | मित्रामित्रविधिः । |
| ७ | " | " | ग्रहस्वरूपः प्रथमः । |
| ९ | " | " | होरास्वरूपः द्वितीयः । |
| ११ | " | " | द्रेक्काणस्वरूपस्तृतीयः । |
| १३ | " | " | ग्रह ... ... विधिः । |
| १५ | " | " | आधानविधिः । |
| १६ | " | " | सूतिकाविधिः, मूलत्रिकोणविधिश्च । |
| " | " | " | मित्रक्षेत्रविधिः, नीचक्षेत्रविधिश्च । |
| १८ | " | " | राजजन्म । |
| " | " | " | चोरजन्माध्यायः । |
| २० | " | " | चन्द्रयोगविधिः । |
| " | " | " | सूर्य्ययोगविधिः । |
| २२ | " | " | सूर्य्यराशिफलम् । |
| २३ | " | " | बुधराशिफलम् । |
| २४ | " | " | शुक्रराशिफलम् । |
| ३० | " | " | चन्द्रराशिफलम् । |
| " | " | " | मेषलग्नफलम् । |
| ३१ | " | " | वृषलग्नफलम् । |

( एवं कर्कट, सिंह, कन्या, तुला, वृश्चिक,
धनुः, मकर, कुम्भ, मीन,—लग्नानां फलानि ।

| | | | |
|---|---|---|---|
| ३३ | " | " | लग्नफलं समाप्तम् । |
| ३४ | " | " | लग्नगतग्रहदृष्टिः । |
| ३५ | " | " | द्विग्रहयोगः । |
| ३६ | " | " | प्रव्रज्यायोगः । |
| ३९ | " | " | स ... ... भावफलम् । |

५१ पत्रे इति यवनजातके नवांशफलम् ।
५२ ,, ,, चन्द्रांशदृष्टफलम् ।
५७ ,, ,, अरिष्टयोगः । आयुर्दायश्च ।
६० ,, ,, दशापाकफलम् ।
६२ ,, ,, निर्य्याणगतिः समाप्ता ।
७२ ,, ,, त्रयस्त्रिंशच्छतद्वयाधिकसहस्रद्वय-अङ्कानि ।
२२३३ ।
७३ ,, ,, प्रश्नजातकः समाप्तः ।
७४ ,, ,, कण्टकयोगः ।
७५ ,, ,, अन्योऽन्यवर्गः ।
७६ ,, ,, यात्रादिग्रहयोगः ।
८३ ,, ,, एकर्क्षयोग – – – दिविधिः ।
८९ ,, ,, यवनप्रश्ने मृत्युफलम् ।
९२ ,, ,, स्वप्नविधिः समाप्तः ।
९४ ,, ,, यात्रासन्दर्शनविधिः ।
१०२ ,, ,, यवनजातके – – – परिसमाप्तः ।
उपेन्द्रवज्रावृत्त ... ... ।

११८६

नरपतिजयचर्य्याटीका ।
जगज्ज्योतिर्मल्लेन रचिता । शाक १५३९ ।

१२०६

(क) होराशास्त्रम् ।
३० पत्राणि । अक्षर – नेवारी ।

प्रारम्भवाक्यम् । ॐ नमः सूर्य्याय ।
मूर्त्तिर्त्त्वे परिकल्पितः शशिभृतो – – पुनर्जन्मना-(?)
मात्मेत्यात्मविदां क्रतुश्च यजतां भर्त्तामरज्योतिषाम् ।
लोकानां प्रलयोद्भवस्थितिविभुश्चानेकधा यः श्रुतो
यायं नः स ददात्वनेककिरणस्त्रैलोकादीपो रविः ॥

भूयोभिः पटुबुद्धिभिः पटुधिया होराफलं ज्ञप्तये
शब्दन्यायसमन्वितेषु बहुशः शास्त्रेषु दृष्टिष्वपि ।
होरातन्त्रमहार्णवं प्रतरणे भग्नोद्यमानामहं
स्वल्पं वृत्तविचित्रमर्थबहुलं शास्त्रप्लवं प्रारभे ॥ इत्यादि ।

ग्रन्थं खण्डितम् ।

पुष्पिकाः ; – होराशास्त्र राशिसंज्ञाध्यायः
" ग्रहयोनिभेदः ।
" वियोनिपातकम् । (?)
" आयुर्दायाध्यायः
" अष्टवर्गाध्यायः ।
" कर्मयोगाध्यायः ।
" राजयोगाध्यायः ।
" संख्यायोगाध्यायः ।
" चन्द्रयोगाध्यायः ।
" प्रव्रज्यायोगाध्यायः ।

(ख) भोजदेवसंग्रहः ।
( खण्डितान्तः । ) अक्षर – नेवारी ।

(ग) वैदिकमन्त्रसंग्रहः ।
( ऋग्वेदीयः ।) १६ पत्राणि । अक्षर – नेवारी ।

प्रारम्भवाक्यम् । ॐनमो ब्रह्मणे नमः ।
अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् ।
होतारं रत्नधातमम् ॥ इत्यादि ।

(घ) पुरुषसूक्तम् ।
( खण्डितान्तम् । ) अक्षर – नेवारी ।
संवत् ४४४ चैत्र – – – ।

(ङ) वैदिकमन्त्रसंग्रहः ।
( यजुर्वेदीयः । ) अक्षर – नेवारी ।

स्रोकश्च ; –

इषेत्वोर्जेत्वा वायवस्थ देवो वः सविता । इत्यादि ।

१२३० ।

(च) मानवन्यायशास्त्रम् ।

( नेवारी भाषायाम् ।) ११ – १४३ पत्राणि । अक्षर – नेवारी ।

अन्तवाक्यम् । तन्नमायप्रकरणं समाप्तम् ।

इदमल्पधियां नृणां बुद्धिक्षेयं यशोदितम् ।

नारदीयं यद्..न्यायशास्त्रं महार्थवत् ॥

तस्येयं लिख्यते टीका स्पष्टं नेपालभाषया ।

इमां विज्ञाय भूपाद्याचरन्तु न्यायवर्त्मना ॥

इति मानवे न्यायशास्त्रे नारदप्रोक्तायां संहितायां न्यायधर्मपदशानि समाप्तानि ॥

नेपाले ख्यितिराजमल्लनृपतिर्भूपालचूडामणि-

स्तस्यामात्यवरोऽर्थिकल्पविटपी सन्नीतिवारांनिधिः ।

तस्यार्थं मणिकाभिधेन कृतिना नेपालवाचा कृता

टीका न्यायविकाशिनी सुविदिता मन्वोक्तधर्मस्मृतेः ॥

धीमांश्चन्दनवर्म्मसूनुरमलप्रज्ञाप्रभावस्फुर-

न्नीतिश्चर्छितनाकनायकगुरुर्मन्त्रीन्द्रचूडामणिः ।

जीयात् सर्व्वगुणाश्रयोऽमलयशा मन्त्रप्रभाभास्वरो

मन्त्री श्रीजयतः कृपार्द्रहृदयः सर्व्वार्थिकल्पद्रुमः ॥

श्रीनेपालिकवत्सरे खखशरे पक्षे सिते फाल्गुने

मासे चाग्नितिथौ ...... भक्तापुरीपत्तने ।

राज्ञे श्रीख्यितिराजमल्लनृपतौ राजश्रियश्रीपतेः

श्रीमन्न्यायविकाशिनी सुविदिता सम्पूर्त्तिमागादियम् ॥

लिखिता लून(लुन्द)भद्रेण वज्राचार्य्येण धीमता ।

मन्त्रीन्द्रजयतस्यार्थं स्पष्टेयं न्यायटिप्पनी ॥

स्वस्ति श्रीनेपालिकसंवत्सरे ५०० फाल्गुनशुक्लतृतीयायां गुरुवासरे श्रीश्रीजयख्यितिराजमल्लदेवस्य विजयराज्ये भक्तपुरे अमात्यजयतवर्म्मणः

पुस्तकमिदमलेखि श्रीकीर्त्तिपुण्यमहाविहाराधिवासिना शाक्यभिक्षु-वर्याचार्य्य-श्रीलुन्द(लून)भद्रेणेति । शुभमस्तु सर्व्वजगताम् ।
श्रीमानमात्यजयतो रिपुमन्त्रिमन्त्रप्रोढ़ाम्बुदप्रसरविस्फुरणैकवायुः ।
स्वस्वामिकार्य्यपरिपालनवायुसूनुः पायात् प्रजा निजसुतानिव सर्व्वदैव॥

(छ) मैथिलब्राह्मणानां कुलपञ्जी ।
( खण्डिता । ) मैथिलाक्षरलिखिता ।

(ज) एकादशीव्रतमाहात्म्यम् ।
अक्षर – नेवारी । ३२ पत्राणि ।
संवत् ४०० फाल्गुन-कृष्ण-एकादश्यां तिथौ सोमवासरे ।
श्रीनेपालदेशे श्रीपशुपतिस्थाने श्रीआनन्दमल्लदेवस्य राज्ये लिखित ...।

(झ) सौरसंहिता ।
प्रारम्भवाक्यम् । ॐ नमः शिवाय ।
कार्त्तिकेय उवाच ।
भगवन् देवदेवेश अनादिपरमेश्वर ।
समाख्यातं त्वया सर्व्वं वाङ्मयं सचराचरम् ॥
आदित्यस्य सुरेशान संशयोऽद्यापि मे महान् ।
आदौ तस्य नमस्कार ...... तदनन्तरम् ॥
क एष देव आदित्यः कुतो जातः किमुच्यते ।
कथयस्व यथान्यायं साम्प्रतं मे महेश्वर ॥ इत्यादि ।
अन्तवाक्यम् । सौरसंहितायां प्रयोजन ...... दशमः पटलः समाप्तः ।
अस्य ग्रन्थप्रमाणस्य निपुणं परिपिण्डितम् ।
सप्तशतिकसंलक्ष्य ? सौरतन्त्रमिदं शुभम् ॥
इति । संवत् ६१ अश्विनि(आश्विन) कृष्णदिवात्रयोदश्यां
श्रीनौनौसालायां निवासिनः ... ... ... ।
अतःपरं द्वे पत्रे गुप्ताक्षरलिखिते स्तः तत्र तन्त्रोक्तानि कानिचि-न्मन्त्राणि सन्ति ।

(ञ) नारदीय-धर्मशास्त्रम् ।
अक्षर – नेवारी ।

(ट) विवादचन्द्रः।
मिसरुमिश्रेण रचितः। मैथिलाक्षरलिखितः। लसं ४८१।

१२६१।

(क) प्रतिष्ठातन्त्रम्।
जीर्णम्। खण्डितम्। अक्षर – नेवारी।

(ख) तत्वचिन्तामणिः।
(अनुमानखण्डः।) गङ्गेश्वरेण रचितः। मैथिलाक्षरलिखितः। लसं ४३६।

(ग) कर्पूरमञ्जरीनाटिका।
मैथिलाक्षरलिखिता। लसं ३५८।

(घ) वाग्वतीमाहात्म्यप्रशंसा।
खण्डिता। अक्षर – नेवारी।

पुष्पिका। वाग्वतीमाहात्म्यप्रशंसायां तीर्थवर्णने प्रश्न + तपसिद्धिर्नाम प्रथमः।

(ङ) तात्पर्य्यपरिशुद्धिः।
उदयनेन रचिता। मैथिलाक्षरलिखिता।

१३२०।

(क) नित्याह्निकतिलकम्।
अक्षर – नेवारी। संवत् ३१७।

(ख) दानवाक्यावली।
विद्यापतिना रचिता। २९ पत्राणि। लसं ३९५।
( मङ्गलाचरणादिकं किमपि नास्ति। )

(ग) श्रीदत्तपद्धतिः।
लसं २९९।

(घ) कात्यायनश्राद्धविधिः।
१२ पत्राणि। अक्षर – नेवारी।

(ङ) सन्ध्याविधिः।
अक्षर – नेवारी। संवत् ४०१ चैत्रकृष्णपञ्चम्याम्।

(च) लक्ष्म्यवतारस्तोत्रम् ।

संवत् ४०३ । आषाढ़कृष्णसप्तम्यां .. राजाधिराज......

अनन्तमल्लदेवस्य विजयराज्ये ।

(छ) कौमारीपूजा ।

संवत् ४०० । वैशाख-अमावास्या......

राजाधिराज .... अनन्तमल्लदेवस्य विजयराज्ये ।

(ज) अनन्तव्रतविधिः ।

संवत् ४०५ । श्रावण....राजाधिराज....अनन्त

मल्लदेवस्य विजयराज्ये ।

(झ) महालक्ष्मीव्रतम् ।

(ञ) महालक्ष्मीव्रतम् । वा लक्ष्मीचरित्रम् ।

रामकविराजेन रचितम् ।

अन्त्यवाक्यम् । श्रीरामनामककविराजकृतं पवित्रं

लक्ष्मीचरित्रमतुलं व्रतराजराजम् ।

कुर्वन्ति धीधनमनाः सुखिनो भवन्तु (?)

.. .. .. .. कमलाप्रसादात् ॥

इति महालक्ष्मीमहा .. महापण्डित-श्रीश्रीरामविरचिते पञ्चमोऽध्यायः

समाप्तः ॥

संवत् ३९९ । फाल्गुन .. .. .. ।

.. .. राजाधिराज .. .. .. श्रीअनन्तमल्लदेवस्य विजयराज्ये ।

(ट) विष्णुपञ्जरस्तोत्रम् ।

संवत् ४०० ।

(ठ) शनैश्चरस्तवः ।

( स्कन्दपुराणीयः । ) अक्षर – नेवारी ।

(ड) नीलकण्ठस्तवः ।

संवत् ४०७ ।

(ढ) वाजसनेयिनामहोराचाश्रितधर्म्मनिबन्धः । (?)

(स्मृतिशास्त्रम् ।)

प्रारम्भवाक्यम् । .. दाचितोरखयचेषु (?) विबुधानन्ददायिने ।

हरिरब्धिसुतावक्षसोमपीतौ(थौ)पुनातु वः ॥

अहोरात्राश्रितो धर्म्म इह वाजसनेयिनाम् ।

निबध्यते निब – – – – भि ॥

तत्र मनुः । ब्राह्मे मुहूर्त्ते बुध्येत धर्म्मार्थौ चानुचिन्तयेत् ।

कायक्लेशांश्च तन्मूलान् वेदतत्त्वार्थमेव च ॥ इत्यादि ।

अन्त्यं खण्डितम् ।

(ण) नित्याह्निकतिलकम् ।

संवत् ५२३ ।

(त) पुरुषपरीक्षा ।

विद्यापतिरचिता । १०६ पत्राणि । लसं ५४२ ।

(थ) माधवानलकथा ।

प्रारम्भवाक्यम् । ॐ नमः शिवाय ।

प्रणम्य परया भक्त्या हंसयानां सरस्वतीम् ।

तस्याः प्रसादमासाद्य करिष्यामि कथामिमाम् ॥

अस्ति ... पुष्पवती नाम नगरी । ... तत्र नगरे राजा गोविन्दचन्द्रो-
नाम तस्य राज्ञीनां सप्तशतानि तासां मध्ये पट्टराज्ञी महादेवी पद्मिनी-
जातिः पद्मावती नाम .. .. .. तस्य राज्ञो गृहे माधवानलनामा
विप्रोऽस्ति । इत्यादि ।

अन्तवाक्यम् । इति माधवानलकथा समाप्ता । लसं ५४२ ।

(द) महालक्ष्मीमतभट्टारकः ।

विवरणं प्रदत्तम् ।

१२९१

(क) तात्पर्य्यपरिशुद्धिः ।

२४ पत्राणि । मैथिलाक्षरलिखिता ।

प्रारम्भवाक्यम् । ॐ नमो गणेशाय ।
रागानुगतधर्म्मेशो चन्द्रसूर्य्याग्निलोचनौ ।
नमामि गिरिजेशानौ यामिनीवासराधिप ॥ इत्यादि ।

पुष्पिका । इत्याचार्य्यश्रीमदुदयनकृतौ तात्पर्य्यपरिशुद्धौ पञ्चमोऽध्यायः । लसं ४०३ चैत्रवदि १ चन्द्रे ए दिने भट्टाचार्य्यश्रीवाणीनाथस्याज्ञया – – श्रीवाचस्पतिशर्म्मणा लिखितमिदं पुस्तकम् ।

(ख) दानधर्म्मः ।
( महाभारतशान्तिपर्व्वीयः । ) अक्षर – नेवारी ।

पुष्पिका । महाभारते शतसाहस्र्यां संहितायां दानधर्म्मेषु वैष्णवधर्म्मशास्त्रे पञ्चदशोऽध्यायः परिसमाप्तः । संवत् १६९ । ( अक्षराण्यङ्कानि । )

१२१०

(क) सारसङ्ग्रहः ।
( धर्म्मशास्त्रम् । )

पुष्पिका । इति वेदवैष्णवसिद्धान्तरहस्ये सारसङ्ग्रहे लक्षहोमविधौ नवमः परिच्छेदः परिसमाप्तः । शुभमस्तु । संवत् ३०५ ।

(ख) न्यायवार्त्तिकतात्पर्य्यटीका ।
( पञ्चमाध्यायस्य । ) वाचस्पतिमिश्रेण रचिता ।

१२६१ ।

(क) दशक्रियाविधिः ।
( खण्डितः । ) अक्षर – नेवारी ।

(ख) स्तवराजमाहात्म्यम् ।
( भविष्यपुराणोक्तम् । ) अक्षर – नेवारी ।

(ग) शनैश्चरस्तवः ।
( स्कन्दपुराणीयः । ) अक्षर – नेवारी ।
संवत् (४९३) रामनन्दपुरे आषाढकृष्णतृतीयायां तिथौ शतभिषानक्षत्रे .. .. .. .. देवज्ञां वज्र(त्न)राजेन लिखितश्च ।

(घ) नयतत्त्वालोकः ।

( तृतीयाध्यायात् खण्डितचतुर्थाध्यायपर्य्यन्तः ।)

वाचस्पतिमिश्ररचितः । मैथिलाक्षरलिखितः ।

पुष्पिका । इति महामहोपाध्यायमिश्रश्रीवाचस्पतिविरचिते नयतत्त्वालोके तृतीयाध्यायः समाप्तः । लसं ४४९ । आश्विने काकोग्रामे ।

(ङ) न्यायवार्त्तिकतात्पर्य्यटीका ।

( द्वितीयाध्यायपर्य्यन्ता । ) उदयनरचिता । शकाब्दाः १४१० । ... ... । सर्षपग्रामे महामहोपाध्यायसन्मिश्रश्रीमच्छङ्कराणां चौपाड्यां गोढ़ीयाम्बष्ठ-श्रीमद्वासुदेवेन – – – – ।

(च) कर्म्मक्रियाकाण्डः ।

सोमशम्भुरचितः । विवरणं प्रदत्तम् ।

(छ) विवादरत्नाकरः ।

( खण्डितः । ) मैथिलाक्षरलिखितः ।

(ज) अमृतेश्वरदेवस्य नित्यपूजाविधिः ।

अक्षर – नेवारी । ११ पत्राणि ।

प्रारम्भवाक्यम् । ॐ नमः शिवाय ।

सव्यापसव्यभुजयोर्दधदिन्दुबिम्बं
कुम्भञ्च भूरिसुधमब्जकशुभ्रशरोर्विः ।
अङ्के प्रियाञ्च वरदाभयपाणिरेष
मृत्युञ्जयो जयति साञ्जनिशाकरो × ॥

– – – – वक्ष्ये येन सिद्ध्यति मन्त्रराट् ।
आदौ स्नानं प्रकुर्व्वीत सर्व्वकिल्बिषनाशनम् ।
अस्त्रमन्त्रेण वैवेभि मृदमुद्धृत्य मन्त्रवित् ॥ इत्यादि ।

अन्तवाक्यम् । इत्यमृतेश्वरदेवस्य नित्यपूजाविधिः ।

(झ) वामकेश्वरीपूजापद्धतिः ।

१७ पत्राणि । अक्षर – नेवारी ।

(ञ) गुरुपंक्तिपूजाविधिः ।

९ पत्राणि । अक्षर – मैथारी ।

(ट) पुरश्चरणचन्द्रिका ।

( खण्डिता । ) देवेन्द्राश्रमरचिता । ४४ पत्राणि । वङ्गाक्षरलिखिता ।

पुष्पिका । इति परमहंसपरिव्राजकाचार्यश्रीविबुधेन्द्राश्रमपूज्यपाद-शिष्य-देवेन्द्राश्रमविरचितायां पुरश्चरणचन्द्रिकायां कुण्डमण्डपविधानम् ।

(ठ) किरणावलीटीका ।

वङ्गाक्षरलिखिता ।

प्रारम्भवाक्यम् । ॐ नमो भगवते गोपालाय ।

विद्यासन्ध्योश्चयोद्रिकादविद्यारजनीक्षये ।
यदुदेति नमस्तस्मै कस्मैचिद्व विश्वतत्त्विषे ॥
यतो द्रव्यं गुणाः कर्म्म तथा जातिः परापरा ।
विशेषाः समवायो वा तमीश्वरमुपास्महे ॥
अर्थानां प्रविवेचनाय जगतामन्तस्तमःशान्तये
सन्मार्गस्य विलोकनाय गतये लोकस्य यात्राखिलः । ?
तत्तत्तामसभूतभीतय इमां विद्यावतां प्रीतये
व्यातेने किरणावलीमुदयनः सत्तर्कतेजोमयीम् ॥
अतिविततमसारं मानवार्त्ताविहीनं
प्रविततबहुवेलप्रक्रियाजालदुःस्थम् ।
उदधिसममतन्त्रं तन्त्रमेतद्व यदन्ति
प्रखलजड़धियो ये तेऽनुकम्प्यन्त एते ॥

शास्त्रारम्भे सदाचारपरम्परापरिप्राप्ततया कायवाङ्मनोभिः कृतं परापरगुरुनमस्कारं शिष्यान् शिक्षयितुमादौ निबध्नाति प्रथम्येति । इत्यादि ।

अन्तवाक्यम् । इतिशब्दो द्रव्यपदानुसमासो । शकाब्दाः १४९१ ।

– – – श्रीहरिशर्म्मणः स्वाक्षरमिदं पुस्तकम् ।

नवद्वीपे पुस्तकं साङ्गं यातम् ॥

(ड) अमरकोषः ।

वङ्गाक्षरलिखितः ।

अन्तवाक्यम् । विसं १५११ । श्रावणशुक्लनवम्यां शुक्रे श्रीचम्पकारण्यनगरे विप्रराजदैत्य (?) नारायणसीत्यादिविविधविरुदराजिविराजमानमहाराजाधिराज- श्रीमन्मदनसिंहदेवानां सम्मुज्यमानविजयराज्ये ठक्कुरश्रीगङ्गयीकेर्लिखितमिति ।

(ढ) देवीमाहात्म्यटीका ।

( दुर्गासन्देहभेदिकानाम्नी । ) वङ्गाक्षरलिखिता ।

पुष्पिका । इति हारिताग्रश्रीपीताम्बरकृतायां दुर्गासन्देहभेदिकायां त्रयोदशे माहात्म्ये तदुपसंहारविवेचनम् ।

श्रीमानिमां हलधरोऽलिखदम्बिकाया-
ष्टीकाङ्ग वंशमखिराह्यस शेषमध्ये (?) ।
नेत्राब्धिरामयुतलक्ष्मणसेनवर्षे
भाद्रे कुजे हरिपुरे हरिवासरे द्राक् ॥

१२६२

(क) महापुरुषस्तवः ।

( भागवतदशमस्कन्धीयः । ) १० पत्राणि ।

अक्षर – नेवारी । श्रीमन्नेपालिकसंवत् —
ऋतुग्रहरसवर्षे ज्येष्ठमासे कृष्णा ९ ॥

(ख) अनन्तव्रतानुष्ठानम् ।

( भविष्योत्तरीयम् । ) ५ पत्राणि । अक्षर – नेवारी ।

(ग) विष्णुजन्मानुकीर्त्तनम् ।

( भविष्यपुराणीयम् । ) अक्षर – नेवारी ।

(घ) रामचन्द्रनामाष्टोत्तरशतम् ।

( पद्मपुराणोत्तरखण्डीयम् । ) अक्षर – नेवारी ।

(ङ) वशिष्ठदिलीपसंवादः ।

( पद्मपुराणोत्तरखण्डीयः । ) ४९ पत्राणि ।

अक्षर – नेवारी ।

(च) महालक्ष्मीमाहात्म्यव्रतव्याख्यानसमुच्चयः ।

गालवकृतः (?) । ५० पत्राणि । अक्षर – नेवारी ।

पुष्पिका । इति महालक्ष्मीमाहात्म्यव्रतव्याख्यानसमुच्चये षोडशः पटलः समाप्तः । श्रेयोऽस्तु संवत् ६८८ चैत्रमासे शुक्लपक्षे ।

(छ) कालभैरवस्तोत्रम् ।

( काशीखण्डीयम् । ) अक्षर – नेवारी । १० पत्राणि ।

(ज) अनन्तव्रतविधानम् ।

७ पत्राणि । अक्षर – नेवारी ।

(झ) अगस्त्यव्रतविधानम् ।

४ पत्राणि । अक्षर – नेवारी ।

प्रारम्भवाक्यम् । ॐ नमो ब्रह्मणे नमः ।

अगस्त्यव्रतं प्रवक्ष्यामि । करन्यासः । अगस्त्य अस्त्राय फट् । अङ्गन्यासः । अगस्त्य हृदयाय नमः । इत्यादि ।

पुष्पिका । इति अगस्त्यव्रतविधानं समाप्तम् ॥

(ञ) विष्णुप्रतिष्ठाविधिः ।

खण्डितान्त्यः ।

३५ पत्राणि । अक्षर – नेवारी ।

प्रारम्भवाक्यम् । ॐ नमो भगवते वासुदेवाय ।

अथ विष्णुप्रतिष्ठाविधिर्लिख्यते । तत्र आचार्य्यनिमन्त्रण-मण्डलकृत-पुरश्चरण-ब्रह्मचर्य्यगायत्री – – – कुण्डलादिकं कृत्वा – – यज्ञमण्डपं गत्वा – – – लभेत ॥ इत्यादि ।

(ट) कालिकाकुलसर्व्वस्वे कालिकास्तोत्रम् ।

मैथिलाक्षरलिखितम् । लसं ५१२ ।

(ठ) सिद्धान्तसारपद्धतिः ।

भोजदेवरचिता । ७१ पत्राणि । अक्षर – नेवारी ।

संवत् १८७ । ( अक्षराण्यङ्कानि । ) कार्त्तिक ।

(ड) वैदिकमन्त्रसङ्ग्रहः । (?)

अक्षर – नेवारी । १३ – १८ पत्राणि ।

१३ पत्रे, – ॐ कन्या इव वहन्तु मे तवा उत्तं जाना अभि चाकशीमि ।

यत्र सोमः भूयते यत्र यज्ञो घृतस्य धारा अभि ततपरं ते ॥ इत्यादि ।

(ढ) अनन्तव्रतोद्यापनविधिः ।

२ – १५ पत्राणि । अक्षर – नेवारी ।

संवत् ६२१ अश्विनी कृष्ण ९ । ... ।

(ण) सारदास्तवः ।

६ पत्राणि । अक्षर – नेवारी । संवत् ५२० चैत्रवदि । ... ।

(त) मञ्जुश्रीसाधनम् ।

विवरणं प्रदत्तम् ।

(थ) षट्साहस्रम् ।

खण्डितादाम् ।

७९ पत्राणि । अक्षर – नेवारी ।

५ पत्रे, –

श्रीदेव्युवाच ।

श्रीमतन्तु महाज्ञानमित्यादितृतीयपटलावधिपर्यन्तं व्याख्यालेखनविधि-स्तथा गुरुशिष्यसमयलक्षणादिकं स्पष्टार्थम् । इति षट्साहस्रे तृतीयः पटलः ।

पुष्पिकाः, — इति षट्साहस्रे १ । २ । ३ । ४ । ५ पटलानि ।

इति० मन्त्रव्याख्यानो ? नाम पटलः षष्ठः ।

इति षट्साहस्रे – ७ । ८ । ९ । १० पटलानि ।

इति० अघोर्य्यष्टकचिविद्या + हृदयस्य लक्षणम् । ११ ।

इति० द्वादशाङ्गषड्ङ्गमालिन्योद्धारे । १२ ।

इति० हृदयशिरोवृतीलक्षणे । १३ ।

इति० शिखावृतीलक्षणे । १४ ।

इति० शिखास्वच्छन्दं देवस्य शिखावृती अघोरमन्त्रोद्धारादिकम् । १५ ।

इति कवचवृत्तौ समाप्ता ।

इति० १६ । १७ । १८ । १९ पटलानि ।

इति० योगिनीनां चक्रमनुविंशतितमः पटलः ।

( ततः परमस्ति पत्रद्वयम् । )

(ट) देवीमाहात्म्यम् ।

( खण्डितम् । ) नागराक्षरम् ।

कुब्जालिकाम्नायान्तर्गत-कुब्जिकामतम् ।

अक्षर – नेवारी ।

खण्डादन्यस्मात्तु विवरणं प्रदत्तम् ।

अन्तवाक्यम् । – – रामदेवस्य परमेश्वरपरमभट्टारकपरमसौगतमहाराजाधिराज-
श्रीमद्रामपालदेवस्य प्रवर्द्ध – – – – ।

१२६४

महाभारतम् ।

( आदिपर्व्वमात्रम् । )

१२७६

(क) महालक्ष्मीमाहात्म्यम् ।

(ख) त्रिपुरसुन्दरीप्रातस्तोत्रम् ।

( रुद्रयामलीयम् । )

(ग) त्रिपुरास्तवः ।

( रुद्रयामलीयः । )

(घ) त्रिपुराकवचम् ।

( सर्व्वार्थसाधनं नाम । )

(ङ) कर्पूरस्तोत्रम् ।

(च) शिवकवचम् ।

( भैरवतन्त्रीयम् । )

(छ) शिवधर्म्मः ।

( शान्त्यध्यायमात्रम् । )

विवरणं प्रदत्तम् ।

(ज) देवीमाहात्म्यम् ।

( खण्डितम् । )

अक्षर – नेवारी ।

१४७२

(क) कुब्जिकामतम् ।

( कुलालिकाम्नायोक्तम् । ) २०० पत्राणि । अक्षर – नेवारी ।

पुष्पिका । इति कुलालिकाम्नाये श्रीकुब्जिकामते समस्तज्ञानावबोधचर्य्यानिर्द्देशो नाम पञ्चविंशतितमः पटलः । इति चतुर्विंशतिसाहस्रे सारात्सारतरं श्रीकुब्जिकाम्नायं श्री – – – – पीठविनिर्गतः पञ्चविंशति(त)मः पटलः ।

सतङ्गे ( शतङ्गे ) वत्सरे पूर्णे पञ्चपञ्चासकाधिके ।

तदा आशा मासे शुक्ले दशम्यां तिथिमुत्तमम् ॥ (?)

विशाख ऋक्षं नामेतु .. .. .. । (?)

लिखितं सारसंग्रहकुब्जिकामताख्यम् ॥

(ख) उपाकर्म्ममन्त्राणि ।

४९ पत्राणि । अक्षर – नेवारी ।

प्रारम्भवाक्यम् । ॐ नमो ब्रह्मणे नमः । पुनः सप्तऋषिभ्यो नमः ।

अथैतदुपाकर्म्मविधिं व्याख्यास्यामः । इत्यादि ।

(ग) देवीकवचम् ।

अक्षर – नेवारी ।

(घ) देवीमाहात्म्यम् ।

अक्षर – नेवारी ।

+ + हयपुष्पबाणाब्दगतवत्स(त्स)रे(?) मासे भाद्रे शुक्लचतुर्थ्यां – –॥

(ङ) आख्यातप्रकरणम् ।
( कातन्त्रीयम् । ) खण्डितम् । अक्षर – नेवारी ।

(च) उपाकर्म्मविधिः ।
अक्षर – नेवारी । संवत् १८० । श्रावण-शुक्ल द्वितीया – – – ॥

(छ) हरिहरस्तोत्रम् ।
( हरिवंशान्तर्गतम् । ) अक्षर – नेवारी ।

(ज) वागीश्वरीस्तोत्रम् ।
अक्षर – नेवारी ।

(झ) देवीमाहात्म्यम् ।
अक्षर – नेवारी । संवत् ५१९ मार्गशिर – शुक्लसप्तम्यां तिथौ ।

(ञ) जीमूतवाहनावदानम् ।
क्षेमेन्द्ररचितम् । अक्षर – नेवारी ।

(ट) मालतीमाधवनाटकम् ।
अक्षर – नेवारी । संवत् २०६ अश्विनी शुक्लपक्षम्यां – – – –
श्रीभिक्षु-बुद्धरचितस्य पुस्तकोऽयम् ॥

(ठ) मेघदूतम् ।
खण्डितम् । मैथिलाक्षरलिखितम् ।

(ड) शिशुपालवधकाव्यम् ।
खण्डितम् । अक्षर – नेवारी ।

(ढ) अमरकोषः ।
अक्षर – नेवारी । संवत् ४१२ ।

(ण) कुशण्डिकाकर्म्मविधिः ।
अक्षर – नेवारी ।

(त) गृह्यपद्धतिः ।
अक्षर – नेवारी ।

अन्तवाक्यम् । शरदि गगनयामे धूर्ज्जटेरष्ट मोक्षे
इयति गतगतकोऽस्मिन् मेचके पौष्यनाके ।
विदितकरतलार्द्धे भानुवारे विशिष्टे
लिखितमिति सम्पूर्णां पद्धतिं सारसंज्ञाम् ॥

(य) सिद्धपञ्चाशिका ।

९ पत्राणि । अक्षर – नेवारी ।

प्रारम्भवाक्यम् । श्रीश्रादिनाथपादुकेभ्यो नमः ।
श्रीमन्महेन्द्राचले रम्ये खट्वाट ? शिखरे स्थितम् ।
सर्व्वज्ञं स(श)वरं वीरं शिवं परमकारणम् ॥
उपसङ्क्रम्य विधिना देवदेवं जगद्गुरुम् ।
प्रणिपत्य महेशानी पृच्छति स्म महेश्वरम् ॥
सिद्धान्तश्चैव डामरं दक्षिणश्चैव गारुड़म् ।
भूततन्त्रञ्च देवेश कुलशास्त्राण्यनेकधा ॥
मया श्रुतानि श्रीनाथ त्वया निगदितानि च ।
इदानीं श्रोतुमिच्छामि कुलमूलावतारकम् ॥
ऊर्द्धं सृष्टिमधः सृष्टिमधोऽधःसृष्टिरेव च ।
कथयस्व प्रसादेन यद्याहं तव वल्लभा ॥ इत्यादि ।

अन्तवाक्यम् । इति सिद्धपञ्चाशिकायां चन्द्रपीठविनिर्गतायां मूलनाथावतारितायां दिव्याज्ञागुणप्रकाशिकायां कुलालीतन्त्रमूलगतायां पञ्चमः पटलः समाप्तश्चेयं श्रीसिद्धपञ्चाशिका । इति श्रीमहादेवेनालेखि ॥

(द) कुब्जिकामतम् ।

६८ पत्राणि । अक्षर – नेवारी ।

प्रारम्भवाक्यम् । ॐ सिद्धिः । भैरवाय नमः ॥
ॐ ह्रीं श्रीं ऐं क्लुं ह्रुं ह्रौं क्रों चः ।
प्रणिपत्य अनादिनाथं अनाथभूतौघामोघनिर्मथनम् ।
सततानन्दितमनसं ससुरासुरवन्दिताङ्घ्रियुगम् ॥

श्रीकुब्जिकोवाच ।

शिवचित्ताज्ञसंघातदुर्विकाशावकाशिने ।
सदोदितप्रशान्ताय नमः श्रीनाथभानवे ॥
वेष्टिता देवदेवेश अज्ञानपटलैरहम् ।
वामदक्षिणसिद्धान्तैः साम्प्रतं वर्त्तते कुधीः ॥
यत् तत् कुलक्रमायातं कुलालीनतुतां गतम् ।
सूत्रसङ्कटनिर्म्मिता कल्पसन्धविवर्जितम् ॥ ?
अपरं शुद्धदिव्योघं निष्कैवल्यं कथं प्रभो ।
पूर्व्ववृत्तान्तसंयुक्तं यथायातं कुलेश्वर ॥
पीठानि पीठनाथाश्च पीठदेव्याश्च पालकाः ।
बालवृद्धकुमाराख्यं क्रमदीपसमन्वितम् ॥
तथा पीठविधैः पीठैर्द्वीपदेव्या समन्वितम् ।
पञ्चाशानाश्च चत्वारि युग्मान्यष्टोत्तराणि च ॥
पालकैश्च चतुस्त्रिंशैस्त्रिविधैरेवमेव हि ।
एवमादिभिरन्यैश्च कुलग्रन्थावतारकम् ॥
श्रीमतीयं सुरेशान सारात्सारतरं महत् ।
कथं पीठास्त्रिस्थानोक्ताः कुलाकुलविभागशः ॥
रं प्रादिकामपर्य्यन्तं उच्यते किं कुलेश्वर ।
कथयस्व प्रसादेन अल्पग्रन्थार्थविस्तरम् ॥
अन्यच्च यन्न पृष्टोऽसि अज्ञानमतिना मया ।
तत्सर्व्वं कथ वै नाथ कुलसारं सुदुर्लभम् ॥ इत्यादि ।

अन्तवाक्यम् । निर्गूढं समाप्तम् ॥
पण्डित-श्रीमहादेवेन लिखितम् ॥

पुष्पिकाः ;— इति निर्गूढे ज्ञानसद्भावे दिव्यौघे कुब्जिकामते ।
आद्यावतारे योगश्च तवाख्यातं वरानने ॥
इति निर्गूढे ज्ञानसद्भावे दिव्यौघे कुब्जिकामते ।
साधिष्ठानसमायोगे तवाख्यातं कुलाम्बिके ॥
इति निर्गूढे ज्ञानसद्भावे दिव्यौघे कुब्जिकामते ।
द्वीपमार्गं मया ख्यातं त्वत्प्रियार्थं सुलोचने ॥

(ध) योगपीठः ।

५ पत्राणि । अक्षर – नेवारी ।

पुष्पिका ;— योगपीठे क्रमोदयो नाम १ मः पटलः ।

„ „ „ २ यः पटलः ।

(ततो नास्त्यन्या पुष्पिका ।)

(न) गृह्यपरिशिष्टम् ।

अक्षर – नेवारी । ३८ पत्राणि ।

प्रारम्भवाक्यम् । ॐ नमो नारायणाय ।

विट्कल्पं वा स्वगृह्योक्तं यस्य कर्म्म प्रकीर्त्तितम् ।

तस्य तावन्ति शास्त्राणि – – – कृतं भवेत् ॥

इति गृह्यपरिशिष्टम् । इत्यादि ॥

(प) पराशरस्मृतिः ।

अक्षर – नेवारी ।

प्रारम्भवाक्यम् । ॐ नमो गणेशाय ।

अथातो हिमशैलाग्रे देवदारुवनाश्रये ।

व्यासमेकाग्रमासीनं ऋषयः पृच्छन्ति – –॥

मानुषाणां हितं धर्म्मं वर्त्तमानं कलौ युगे ।

शौचाचारं – – वद सत्यवतीसुत ॥

– – – – व्यासो दीप्ताग्निसन्निभः ।

प्रत्युवाच महातेजा श्रुतिस्मृतिविशारदः ॥ इत्यादि ।

अन्त्यवाक्यम् । यादृशं पुस्तकं + + + + + + ।

+ + + + + + + + ॥

पुष्पिकाः । २ पत्रे ;— इति पराशरधर्म्मशास्त्रे प्रथमोऽध्यायः ।

५ „ „ „ „ द्वितीयः ।

७ „ „ „ „ तृतीयः ।

९ „ „ „ „ चतुर्थः ।

११ „ „ „ „ पञ्चमः ।

१४ „ „ „ „ षष्ठः ।

१७ पत्रे,— इति पराशरधर्म्मशास्त्रे सप्तमः ।
१९ ,, ,, ,, ,, अष्टमः ।
२१ ,, ,, ,, ,, नवमः ।
२४ ,, ,, ,, ,, दशमः ।
२५ ,, ,, ,, ,, एकादशः ।
२६ ,, ,, ,, ,, द्वादशः ।

१४७५

(क) मानवधर्म्मशास्त्रम् ।
(खण्डितम् ।) नागराक्षरम् ।

(ख) संवत्सरप्रदीपः ।
(आदिखण्डितः ।) मैथिलमक्षरम् । शकाब्दाः १४८७ । शोनगर ।
स्वर्णग्रालकश्रीलक्ष्मीनाथदत्तस्याक्षरम् ।

(ग) चाणक्यश्लोकाः ।
मैथिलमक्षरम् ।

(घ) अमरकोषटिप्पनी ।
अक्षर – नेवारी ।

(ङ) उग्रभेदः ।
अक्षर – नेवारी ।

(च) रूपावतारव्याकरणम् ।
मैथिलमक्षरम् । १२१ पत्राणि ।

प्रारम्भवाक्यम् । ॐ नमः शिवाय ।
सर्व्वज्ञमनन्तगुणं बालप्रबोधनार्थमहम् ।
रूपावतारमल्पं सुकलापमृजुं करिष्यामि ॥
येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥
कृता सुकृतिना चेयं प्रक्रिया धर्म्मकीर्त्तिना ।
पोतानां पोतवत् क्षिप्रं शब्दाब्धौ पारगामिनाम् ॥

तत्रादौ तावत् प्रत्याहाराः शास्त्रे संज्ञासंव्यवहारस्थापनार्थमनुव × ते ।
तद्यथा अ इ उ ण । इत्यादि ।

अन्तवाक्यम् । रेफ उपोत्तमो वेति विशेषणार्थः । पटुजातीयः । मृदुजातीयः । इति रूपावतारः समाप्तः । लसं ३६१ भाद्रसुदि ५ शनौ ।

(छ) शारीरकमीमांसाभाष्यम् ।
(चतुर्थाध्यायस्य ।) शङ्कराचार्य्यकृतम् । मैथिलअक्षरम् ।

१ ५ ० ८

(क) बौद्धाधिकारव्याख्या ।
(खण्डितान्ता ।) नरहरिकृता । मैथिलअक्षरम् । ७१ पत्राणि ।

प्रारम्भवाक्यम् । श्रीनरसिंहाय नमः ।
नमयन्नवनीभुजां शिरोभि र्दलयन्नष्टकुलाचलैः सहैव ।
रभसेन शरासनं पुरारेर्भविकं मामकमातनोतु रामः ॥
सूक्ष्मा पितृचरणानामवगतसन्दर्भसारेण ।
क्रियते श्रीनरहरिणा व्याख्या बौद्धाधिकारस्य ॥
समाप्तिकामनया कृतं प्रणामं शिष्यशिक्षायै निबध्नाति स्वाम्यमिति ।
इत्यादि ।

(ख) भगवद्गीता ।
अक्षर – नेवारी । संवत् ४८१ । माघशुक्लनवम्यां तिथौ ।

(ग) प्रह्लादचरित्रम् ।
(विष्णुपुराणीयम् ।) अक्षर – नेवारी ।

(घ) गोपालध्यानराजः ।
(गोपालतन्त्रीयः ।) अक्षर – नेवारी ।

(ङ) देवीमाहात्म्यम् ।
नागराक्षरम् । संवत् १४९२ । समये भाद्रसुदि .. महाराजा ....
पृथ्वीसिंहदेवभुज्यमानराज्ये चम्पकारण्यनगरे । शुभमस्तु ।

(च) वैशाखमाहात्म्यम् ।
(पद्मपुराण-पातालखण्डीयम् ।) अक्षर – नेवारी ।

(छ) रामायणम् ।

( उत्तरकाण्डम् । ) अक्षर – नेवारी ।

अन्त्यवाक्यम् । मुनिबाणरसे वर्षेयाषाढे मासि पाण्डरे ।

काले गुरौ रामकथां लेखयिद्विश्वनाथभवत् ॥

(ज) शिवरात्रिविधानम् ।

मैथिलमक्षरम् । ( पद्मपुराणीयम् । )

(झ) वशिष्ठदिलीपसंवादः ।

( पद्मपुराणोत्तरखण्डीयः । ) अक्षर – नेवारी ।

(ञ) भगवद्गीता ।

अक्षर – नेवारी ।

अन्त्यवाक्यम् । अब्देऽस्मिन् श्रुतिरामदन्तिवलिते मासेऽपि मासे शुचौ (?)

.. .. .. .. .. .. .. .. ।

.. .. .. .. .. .. .. ..

.. .. .. .. .. .. .. .. ॥

(ट) कृत्यकल्पतरुः ।

( आद्यन्तखण्डितः । ) लक्ष्मीधरकृतः । अक्षर – नेवारी ।

(ठ) प्रतिष्ठातन्त्रम् ।

अक्षर – नेवारी । ( आदिखण्डितम् । )

अन्त्यवाक्यम् । इति निश्वासाख्ये महातन्त्रे प्रतिष्ठातन्त्रं समाप्तम् ।

वेदे मन्मथबाणनरनेत्रे वत्सरे सुसंयाते

फाल्गुनमासशुक्लषष्ठ्यां भृगुवासरे सुभगे ।

श्रीमन्नरेन्द्रदेवे राजेन्द्रे राजराजसादृश्ये

नेपालेऽस्मिन् गुणवति पशुपतिपादाब्जपरिवृते ॥

भक्तश्रीमणिधामा वटकमहीपालपुत्रसम्भारो । ?

दैव्यामताभिधानं पुस्तकमभिलिखति भक्तिचित्तेन ॥

पुष्पिकाः ;— इति दैव्यामते महातन्त्रे वास्तुपटलः ।

" " वेधलक्षणे चतुरोत्तरशततमः पटलः ।

इति देव्यामते योज्यापोज्यलक्षणम् ।
" " भित्तिबन्धनम् ।
" " भूमिबन्धनम् ।
" " गुरुशिष्यविशेषणम् ।
" " प्रासादोद्गमनम् ।
" " भित्तिप्रमाणनियमः ।
" " सूत्रपातलक्षण – – – ।
" " शल्योद्धारलक्षणम् ।

१५२४

(क) उपाकर्मस्नानविधिः ।
अक्षर – नेवारी ।

(ख) शान्तिमन्त्राणि ।
२७ पत्राणि । अक्षर – नेवारी ।

प्रारम्भवाक्यम् । ॐ नमो ब्रह्मणे । ॐ स्वस्ति नो मिमीतामश्विनाभगः स्वस्ति देव्यदिति – – – । स्वस्ति पूषा असुरोदधातु नः स्वस्ति । इत्यादि ।

अन्तवाक्यम् । विश्वेदेवाः शान्तिः ब्रह्म शान्तिः + + शान्तिरेव शान्तिः + + शान्तिरेघा । शुभं श्रेयोऽस्तु संवत् ६६७ भाद्र ... ।

(ग) देवीमाहात्म्यम् ।
मैथिलाक्षरम् । लसं ३९२ (?) पौषवदि ३ बुधे महाराजाधिराजश्रीकंसनारायणदेवप्रचारेण – – – – प्रयासेन सुप्रतिष्ठ – – श्रीउदयकरेण लिखितेयं पुस्तीति । श्रीरामभद्रलक्ष्मणाभ्यां नमः ॥

(घ) मृत्युञ्जयस्तवः ।
अक्षर – नेवारी ।

अन्तवाक्यम् । इति पारमेश्वरे चतुरशीतिसाहस्रे मृत्युञ्जयस्तवः समाप्तः ॥

(ङ) देवीमाहात्म्यम् ।
अक्षर – नेवारी । संवत् ३८५ । मार्गशिर .. श्रीराजाधिराज ....

श्रीश्रभयमल्लदेवस्य विजयराज्ये श्रीनीलीमोलाया ? मधिवासि
श्रीमणिनागशालि — — — — — ॥

(च) देवीमाहात्म्यम् ।
अक्षर — नेवारी । .. राजाधिराज .. श्रीश्रीधर्म्ममल्लदेवस्य विज
राज्ये । संवत् ११८ माघकृष्णाष्टम्यां .... वज्राचार्य्य-श्रीसुग
चन्द्रस्य लिखितम् । शिवमस्तु सर्व्वजगताम् । .... ॥

(छ) प्रबोधचन्द्रोदयनाटकम् ।
(प्राचीनास्य लिपिः किन्तु श्राद्यन्ते च कानिचित् पत्राणि नवी
लिखितानि सन्ति ।) अक्षर — नेवारी ।

(ज) तन्त्राख्यानकथा ।
अक्षर — नेवारी ।

प्रारम्भवाक्यम् । ॐ नमः सर्व्वज्ञाय ।
तन्त्राख्यानकथा चैव बुद्धिपद्मप्रबोधिनी ।
आदित्यदीधितिमिवं तां निगाद्यामि यत्नतः ॥
ततो नेपाली भाषा —
श्लोकाः —

३० पत्रे ;— यस्य बुद्धिः सुखं तस्य निर्बुद्धेस्तु कुतः सुखम् ।
सर्व्वकुञ्जरमध्यस्थो निष्क्रान्तो जम्बूको धिया ॥ इत्यादि ।
ततोऽस्य श्लोकस्य भाषयानुवादः ।

६४ पत्रे ;— वर्द्धमानोऽपि पापेन यः पापान्न निवर्त्तते ।
आसादयति दुर्म्मेधा .... कर्कटग्रहान् ॥
ततोऽस्य श्लोकस्य भाषयानुवादश्च ।

अन्तवाक्यम् । संवत् ७२५ । कार्त्तिक ।

## १५२६

(क) वशिष्ठदिलीपसंवादः ।
(पद्मपुराणोत्तरखण्डीयः ।) अक्षर — नेवारी ।

(ख) विविधविद्याविचारचतुरा ।

प्रारम्भवाक्यम् । ॐ नमो नारायणाय ।

सर्व्वकामावाप्तये शान्तिकपौष्टिकान्युच्यन्ते । तत्र नवग्रहमखस्त्रिविधः अयुतहोमो लक्षहोमः कोटिहोमश्चेति ॥ इत्यादि ।

अन्तवाक्यम् । वाजपेयातिरात्राभ्यां हेमन्तशिशिरे स्थितम् ।
अश्वमेधसमं प्राहुर्वसन्ते चैव यत् स्थितम् ।
ग्रीष्मे च स्थितं तोयं राजसूयाद् विशिष्यते ॥
एतन्महाराजविशेषधर्म्मान् करोति यो धर्म्मपरः सुबुद्धिः ।
स याति रुद्रालयमाशु पूतः कल्पाननेकान् दिवि मोदते च ॥
अनेन लोकान् समहस्तपादान् भुक्त्वा परार्द्धं द्वयमङ्गनाभिः ।
सहैव विष्णोः परमं पदं यत् प्राप्नोति तद् योगबलेन भूयः ॥

पुष्पिका ;— इति श्रीमद्भोजदेवविरचितायां विविधविद्याविचारचतुराभिधानायां नवग्रहमखतुलापुरुषादिमहादानादिकर्म्मपद्धतौ तड़ागवापीकूपप्रतिष्ठाविधिः । परिसमाप्तायेयमिति ॥ समस्तेत्यादि महाराजाधिराजवरकुमारश्रीमद्गदाधरदेवपादानामाज्ञया श्रीशुभपतिभिर्लिखितमिदं पुस्तकमिति । लसं ३७२ । श्रावणवदि १ शुक्रे श्रीरत्नधरनगरे । ॐ नमो भगवते वासुदेवाय ।

(ग) दशकर्म्मपद्धतिः ।

अक्षर – नेवारी । संवत् २९६ (?) चैत्रशुक्लपूर्णमास्यां राजाधिराजपरमेश्वर श्री अ+ल देवस्य विजयराज्ये पुस्तकोऽयं लिखितमिति ।

(घ) प्रतिष्ठातत्त्वम् ।

रघुनन्दनकृतम् । बङ्गाक्षरैर्लिखितम् ।

अन्तवाक्यम् । सङ्केतिते शकाब्दे समत्रयपवित्रतारकाधीशैः ।
श्रीमत्फाल्गुनमासे शुक्लप्रतिपत्तिथौ शुक्रे ॥
व्यलिखत् केशवशर्म्मा ।

(ङ) वशिष्ठदिलीपसंवादः ।

( पद्मपुराणोत्तरखण्डीयः । ) अक्षर – नेवारी ।

(च) धूर्त्तसमागमनाटकम् ।

ज्योतिरीश्वरकृतम् । ११ पत्राणि । अक्षर – नेवारी ।

प्रारम्भवाक्यम् । ॐ नमो गणेशाय ।

इषदिम्भोजजन्मप्रभृतिदिविषदां संसदि प्रीतिमत्या-
+ + मौलौ पुरारेर्हु + ति परिणये सात्ततं चुम्ब्यमाने । (?)
तद्वक्त्रं शैलवक्त्रैर्मिलितमिति भृशं वीक्ष्य चन्द्रः सहासो
दृष्ट्वा तद्वृत्तमाशु स्मितिसुभगमुखः पातु वः पञ्चवक्त्रः ॥

अपिच । वक्त्राम्भोरुहि विस्मिता स्तवकिता वक्षोरुहि स्फारिताः
श्रेणीसीमनि गुम्फिताश्चरणयोरङ्घ्रोः पुनर्विस्तृताः ।
पार्व्वत्याः प्रतिगात्रचित्रगतयस्तन्वन्ति(न्तु) भद्राणि वो
विश्लुष्यान्तिकपुष्पसायकशरैरौशस्य दृग्भङ्गयः ॥

नान्द्यन्ते सूत्रधारः । अलमतिविस्तरेण । यदद्य –

मानायोधनिरुद्धनिर्ज्जितसुरत्राणत्रसद्वाहिनी-
नृत्यद्भीमकबन्धमेलकरलद्भूमिभ्रमद्भूधरः ।
अस्ति श्रीहरसिंहदेवनृपतिः कार्णाटचूडामणि-
र्दृप्यत्पार्थिवसार्थमौलिमुकुटन्यस्ताङ्घ्रिपङ्केरुहः ॥
तस्योत्कृष्टभुजप्रतापदहनज्वालानिरस्ता यदा
राज्ञः सर्व्वगुणानुरागपदवीविद्योतनाचार्य्यकः ।
यो धीरेश्वरवंशमौलितिलको दातावदाताशय-
स्तस्य श्रीकविशेखरस्य कविता मच्चित्तमालम्बते ॥
तदनेन सकलसङ्गीतविद्याशेखरविद्योतनाभिनयभरतेन ..........
श्रीरामेश्वरपौत्रेण तत्रभवतः पवित्रकीर्त्तिधीरेसिंहस्यात्मजेन महोशासन-
श्रेणिशेखरश्रीमत्पल्लिजन्मभूमिनायककविशेखराचार्य्यश्रीज्योतिरीश्वरेण
निजकुतूहलविरचितं धूर्त्तसमागमं नाम नाटकं अभिनेतुमादिष्टोऽस्मि
इत्यादि ।

अन्तवाक्यम् । इति निष्क्रान्ताः सर्व्वे ।

पुष्पिका ;— कविशेखराचार्य्यश्रीज्योतिरीश्वरविरचितं धूर्त्तसमागमं नाम नाटकम् ।

(छ) रागमाला ।

अक्षर – नेवारी । ३ पत्राणि ।

कागजलिखितायाः एकस्या विवरणं प्रदत्तम् ।

(ज) सङ्गीतसर्व्वस्वम् ।

( अन्तखण्डितम् ।) जगद्धरकृतम् । अक्षर – नेवारी ।

प्रारम्भवाक्यम् । ॐ नमो नृत्यनाथाय ।

स्वर्गाङ्गायमनोपठीयति ललिताङ्गीयति श्रोत्रसं

यद् रङ्गीयति मर्द्दलीयति घनस्तारा च पुष्पीयति ।

गौरी यत्र नटीयतीन्दुतरणी यत् कांस्यतालीयतः

शम्भोरद्भुतनाट्यसङ्गतिरियं भूयात् तव श्रेयसे ॥ (१)

नाट्यदर्पणसङ्गीतवल्लीसङ्गीतशेखरम् ।

नाट्यलोचनसङ्गीतकल्पवृक्षौ निरूपयन् ॥

दशरूपं रत्नकोषं भरतोक्तादिकं तथा ।

सङ्गीतसर्व्वस्वमिदं तनोति श्रीजगद्धरः ॥ इत्यादि ।

(झ) भाषावृत्तिव्याकरणम् ।

( आद्यन्तखण्डितम् । ) मैथिलमक्षरम् ।

(ञ) काव्यप्रकाशः ।

मैथिलमक्षरम् ।

(ट) सिद्धसन्तानसाधनसोपानपद्धतिः वा श्रीमत्पद्धतिः ।

( आद्यन्तखण्डिता । ) यशोराजकृता ।

३१ पत्राणि । अक्षर – नेवारी ।

पुष्पिकाः ;— इति गोपात्मजश्रीयशोराजविरचितायां सिद्धसन्तानसाधनसोपानपद्धत्य-भिधानायां सिद्धमार्गप्रकाशायां श्रीमत्पद्धत्यां ग्रन्थावतारः प्रथमः पटलः ।

इति० गुरुशिष्यविचारो नाम । २ ।

,, वेधदीक्षाविधानो नाम । ३ ।

,, अवस्थाभ्युदयविचारो नाम । ४ ।

इति० वेधप्रवृत्तिविचारो नाम । ५ ।
„ परोक्षानुग्रहो नाम । ६ ।
„ समयविचारे समयवर्णनो नाम । ७ ।
„ आचार्य्याणामधिकारे सङ्केतविनिर्णयो नाम । ८ ।
„ भाग्यावरोहणे मन्त्रोद्धारो नाम । १० ।
„ महाभाग्यावरोहणं नाम योगपटलः । ११ ।
„ भाग्यावरोहणजपविधाने देव्यास्त्वनुस्मरणम् । १२ ।
„ कुलवागेश्वरीविधाने श्लोकद्वादशविनिर्णयो नाम । १३ ।
„ योगिन्याकृष्टिमेलकं नाम । १४ ।
„ स्थानषट्कारविचारो नाम । १५ ।

(ठ) देवीमाहात्म्यम् ।
( खण्डितम् । ) अक्षर – नेवारी ।

(ड) विमलावती ।
(प्राचीन त्रुटिता अन्तेन च खण्डिता ।) अक्षर – नेवारी । १७४ पत्राणि।

प्रारम्भवाक्यम् । नत्वा नादिमलो .. .. .. .. .. .. .. .. ।
पूजाहोमपवित्रदामन . . . . . . स्मृतौ कुम्महे ॥
युक्तदीक्षाप्रतिष्ठाभ्यां बोधवारिधेः
स्वच्छागाधापारभीम स्टु + + + + व × नः ।
स्मृत्या वा शेषसिद्धान्तभाभिः + + + त्वबोधकम्
आर्य्यधर्मशिवाचार्य्यसूर्य्यमाचार्य्यमार्गकम् ॥ (?)
अथोत्थाय रजन्यन्ते शुचिर्वा + + शुचिः सदा ।
प्राणायामाद्यष्टाङ्गयोगं + + + मध्यगम् ॥ इत्यादि ।

पुष्पिकाः ;— विमलावत्यां पूजाविधिः प्रथमः ।
„ होमविधिः । २ ।
„ पवित्रविधिः । ३ ।
५६ पत्रे ;– „ दामनविधिः (?) । ४ ।
१०३ पत्रे ;– „ दीक्षाविधिः । ५ ।
अतो नास्ति पुष्पिका ।

१५२७

(क) देवीमाहात्म्यम् ।

( खण्डितम् । ) अक्षर – नेवारी ।

(ख) मयसङ्ग्रहः । वा प्रतिष्ठातत्त्वम् ।

( आदिखण्डितम् । ) अक्षर – नेवारी ।

पुष्पिकाः ;— मयसङ्ग्रहे वास्तुविधिश्चतुर्थः परिच्छेदः ।

मयसङ्ग्रहे प्रासादविधानं पञ्चमः ।

इति मयसङ्ग्रहे प्रतिष्ठातत्त्वं समाप्तम् ।

(ग) अनुस्मृतिस्तवः ।

( विष्णोरनुस्मरणम् । ) अक्षर – नेवारी ।

(घ) अमरकोषः ।

( स्वर्गवर्गः । ) मैथिलमक्षरम् ।

(ङ) नरपतिजयचर्या ।

( खण्डिता । ) अक्षर – नेवारी ।

(च) उत्तररामचरितनाटकम् ।

नागराक्षरम् ।

१५५८

चान्द्रव्याकरणम् ।

वृत्तिसहितम् । ( द्वितीयाध्यायपर्य्यन्तम् । ) अक्षर – नेवारी ।

१६४ पत्राणि ।

१५५९

(क) देवीमाहात्म्यम् ।

अक्षर – नेवारी ।

अन्तवाक्यम् । शुभमस्तु संवत् ३५८ ज्येष्ठशुक्ले पञ्चमीघटितषष्ठ्यां लिखितं समाप्तीकृतमिति । श्रीश्रीअभयमल्लदेवस्य विजयराज्ये लिखितम् ।

(ख) व्याकरणशास्त्रम् ।(?)

( आद्यन्तखण्डितम् । ) ९१ पत्राणि । मैथिलमक्षरम् ।

२य पत्रस्य प्रारम्भवाक्यम् । आदिर्वर्णोऽन्त्येन इता इत्संज्ञकेन सह गृह्यमाणस्तन्मध्यपातिनां वर्णानां ग्राहको भवति । इत्यादि ।

पुष्पिकाः ;—

४ पत्रे । इति संज्ञावतारः ।

१५ पत्रे । इति संहितावतारः ।

६३ पत्रे । इति विभक्त्यवतारः समाप्तः ।

६४ पत्रे । इति विभक्तिविभागः समाप्तः ।

७१ पत्रे । इति षष्ठ्यावतारः समाप्तः ।

७३ पत्रे । इति षष्ठ्यावतारः समाप्तः ।

७८ पत्रे । इति समासावतारः समाप्तः ।

८१ पत्रे । इत्यनुकाधिकारः समाप्तः । (?)

( ततो नास्त्यन्या पुष्पिका । )

(ग) दृष्टिसूत्रम् ।

( कात्यायनोक्तम् । ) अक्षर – नेवारी ।

(घ) देवीमाहात्म्यम् ।

अक्षर – नेवारी ।

अन्तवाक्यम् । महाराजाधिराजपरमेश्वरपरमभट्टारकश्रीमदभयमल्लदेवस्य विजयराज्ये ।

.. .. ..

(ङ) श्रीकापालेश्वरीभीमादेव्याः पूजापद्धतिः ।

( पितृनिर्मोचनिकाभिधेया । ) अक्षर – नेवारी । ५ पत्राणि ।

(च) निदानम् ।

विवरणं प्रदत्तम् ।

(छ) एकादशीव्रतविधानम् ।

अक्षर – नेवारी ।

(ज) एकादशीमाहात्म्यम् ।

अक्षर – नेवारी ।

(झ) एकादश्युत्पत्तिः ।

अक्षर – नेवारी ।

(ञ) रामायणम् ।

( उत्तरकाण्डम् ।) ( कतिपयानि पत्राणि । ) मैथिलमक्षरम् ।

(ट) वामकेश्वरीमतटिप्पनम् ।

अक्षर – नेवारी । ८० पत्राणि ।

प्रारम्भवाक्यम् । ॐ नमः शिवादिभ्यो गुरुभ्यः । ॐनमस्त्रिपुरभैरव्यै ।

श्रीवामकेश्वरीमते विस्तरणभीत्या विषमटिप्पनकं लिख्यते । देवीशिष्यः प्रशिष्यो वा ग्रन्थमवतारयिषुः नमस्कारं कृत्वा गणेशग्रहनक्षत्रेत्यादि । महादेवीं मातृकां प्रणमामि । इत्यादि ।

अन्तवाक्यम् । मन्त्रं स्मृत्वा होमं कृत्वा हे परमेश्वरि साधकः . . . . . . कालमृत्यु-भयादिभि र्न बाध्यते ।

पुष्पिका ;— इति श्रीवामकेश्वरीमहातन्त्रे त्रिपुराहोमविधिर्नाम पञ्चमः पटलः ।

निर्बाधं परिरक्षति क्षितितलं क्ष्मापालचूडामणौ
वीरश्रीजयराजदेवनृपतौ नेपालभूमण्डलम् ।
शैवाचार्य्यवरस्य मन्मथपतेर्विख्यातकीर्त्तेः कृते
सव्याख्यां च चतुःशतीं समलिखन्नारायणाख्यः कविः ॥

संवत् ४७४ ।

यादृशं पुस्तकं दृष्टं तादृशं लिखितं मया ।
अबद्धं वा सुबद्धं वा मम दोषो न विद्यते ॥
ॐ नमस्त्रिपुरसुन्दर्य्यै । शिवमस्तु ॥

अपराः पुष्पिकाः ;— इति वामकेश्वरीतन्त्रे प्रथमः पटलः ।

„ „ त्रिपुराप्रयोगो द्वितीयः ।

„ „ मुद्रापटलस्तृतीयः ।

„ „ बीजत्रयसाधनश्चतुर्थः ।

„ „ त्रिपुराहोमविधिर्नाम पञ्चमः ।

(ठ) अमरकोषः ।

( द्वादशपत्राणि मात्रम् । )

(ड) महाभारतम् ।

( सभापर्व्व ।) मैथिलमक्षरम् । लसं ३३५ ।

(ढ) ज्योतिषानन्दस्तवः ।

अक्षर – नेवारी । ५ पत्राणि ।

प्रारम्भवाक्यम् । ॐ नमः शिवाय ।

नमस्ते निर्म्मलं देवं नमस्ते ज्ञानरूपिणम् ।

नमस्ते ज्योतीरूपस्य निष्कलस्य नमोऽस्तु ते ॥ इत्यादि ।

अन्तवाक्यम् । अद्यापि शरणं देवि त्वमेव शरणं मम ।

यत्कामं प्रार्थये नित्यं देहि देहि महेश्वरि ॥

पुष्पिका ;— इति ज्योतिषानन्दस्तवः समाप्तः । शुभमस्तु ॥

(ण) षिङ्गिलत्स्यर्चनम् ।

अक्षर – नेवारी । ४ पत्राणि ।

(त) वशिष्ठदिलीपसंवादः ।

( पद्मपुराणोत्तरखण्डीयः ।) अक्षर – नेवारी । संवत् ५८८ ।

१५८३

(क) चान्द्रव्याकरणम् ।

( कतिचित् पत्राणि ।) अक्षर – नेवारी ।

(ख) हितोपदेशः ।

( कतिचित् पत्राणि ।) अक्षर – नेवारी ।

(ग) चान्द्रव्याकरणम् ।

( ३–३३ पत्राणि ।) अक्षर – नेवारी ।

पुष्पिका ;— चान्द्रव्याकरणे षष्ठोऽध्यायः समाप्तः । श्रेयोऽस्तु संवत् ३७१ । कार्त्तिक-कृष्णचतुर्थ्यां । मङ्गलवासरे । शुभमस्तु ॥

(घ) शिशुपालवधटीका ।

( प्रथमसर्गस्य षोडशसर्गस्य च ।) अक्षर – नेवारी ।

प्रारम्भवाक्यम्। ॐ नमः शिवाय।

मोहमातङ्गविध्वंसान्मुक्तिमुक्तावितायिने।

योगीन्द्रमानस .. वासिने हरये नमः॥

निसर्गदुर्व्वोधमबोधविक्लवाः

क्व माघकाव्यं क्व च मादृशाशयाः।

चिकीर्षुरत्रापि तथापि पञ्जिकां

मनोरथानामगतिर्न विद्यते॥

आदौ मङ्गलार्थं विघ्नोपशमहेतुं .. इत्यादि।

(ङ) वैदिकमन्त्रसङ्ग्रहः। (?)

२९ पत्राणि। अक्षर – नेवारी।

प्रारम्भवाक्यम्। + नमो यज्ञपुरुषाय। परिसमूहनमन्त्रः।

य देवा देवहे हुनं देवासश्चक्रमाद्ययम्।

अग्निर्मा तस्मादेनसो विश्वांमुं चत्वगुं हसः॥ इत्यादि।

(च) कालोत्तरतन्त्रम्।

२८ पत्राणि। अक्षर – नेवारी।

पुष्पिका। २८ पत्रे; – इति कालोत्तरे पञ्चविंशतितमः पटलः।

(छ) रामोपाख्यानम्।

(महाभारतारण्यपर्व्वीयम्।) ३–१४ पत्राणि। अक्षर – नेवारी।

(ज) शारदातिलकम्।

(खण्डितम्।) वङ्गाक्षरलिखितम्।

(झ) व्रतपद्धतिः।

रुद्रधरकृता। मैथिलाक्षरम्।

अन्तवाक्यम्। लसं ३४४ आषाढशुक्लद्वितीयायां श्रीसुधाधरेण लिखितमिति।

(ञ) नागानन्दनाटकम्।

(आदितस्त्रीणि पत्राणि न सन्ति।) अक्षर – नेवारी।

अन्तवाक्यम्। संवत् ४३८ फाल्गुन .. .. .. .. श्रीश्रीराजाधिराजपरमधार्म्मिक-
परमभट्टारकश्रीश्रीजयानन्ददेव × श्वरस्य विजयराज्ये।

(ट) देवीमाहात्म्यम् ।
अक्षर – नेवारी ।

(ठ) अनर्घराघवनाटकम् ।
मैथिलमक्षरम् ।

१५८४ ।

(क) तन्त्राख्यानकथा ।
( नीत्युपदेशकश्लोकसंग्रहः । )

(ख) श्लोकसंग्रहः ।

(ग) गीतमाला ।
( नेवारीभाषागीतानि । )

(घ) विनायकस्तवराजः ।

(ङ) देवीमाहात्म्यम् ।

(च) त्रिपुराख्यानादिनित्यकर्मविधिः ।

१५८५ ।

(क) मालतीमाधवनाटकम् ।
लसं ४६९ ।

(ख) काव्यादर्शः ।
( खण्डितः । )

(ग) सौन्दरानन्दकाव्यम् ।
८ पत्राणि ।

१६०६ ।

(क) दानवाक्यसमुच्चयः ।
योगीश्वररचितः । विवरणं प्रदत्तम् ।

१६०८।

(क) चान्द्रव्याकरणम् ।

(ख) भगवद्गीता ।

संवत् ४५२ ।

(ग) मालिनीस्तुतिः ।

( मालिनीच्छन्दसा भगवत्याः स्तवनम् । )

(घ) देवीमाहात्म्यम् ।

संवत् २६२ ।

(ङ) अमरकोषः ।

(च) दशकर्मपद्धतिः ।

(छ) हरिचरितकाव्यम् ।

(ज) देवीमाहात्म्यम् ।

(झ) शिशुपालवधकाव्यम् ।

( खण्डितम् । )

(ञ) हितोपदेशः ।

अन्तवाक्यम् । श्रीयक्षमल्लनृपतेर्विजये च राज्ये
भक्तापुरीनिवसितो वरकीर्त्तिरामः ।
तत्कण्ठभूषणकृतोऽपि हितोपदेश-
श्लोकः समस्तहृदयाब्जविकाशभानुः ॥
संवत् – वेदग्रहवाधी — — — — ।

(ट) अमरकोषः ।

कतिपयानि पत्राणि ।

(ठ) कीचकवधकाव्यम् ।

नीतिवर्म्मकृतम् ।

(ड) विष्णुसहस्रनामभाष्यम् ।

१६२२ ।

(क) जयाख्यसंहिता वा ज्ञानलक्ष्मी ।

( खण्डिता । ) ४५ – ११५ पत्राणि । अक्षर – नेवारी ।

मध्यपुष्पिका । श्रीजयाख्यसंहितायां मानसयाग द्वादशः पटलः ।

अन्तपुष्पिका । श्रीमद्वैपायनाचार्य्यनारायणगर्भपाशानुगृहीतः साधकः चन्द्रसङ्ख्यातायां ज्ञानलक्ष्म्या अन्तिष्ठाविधिश्चतुर्विंशः पटलः ।

संवत् ३०७ फाल्गुनकृष्णषष्ठ्यां श्रीगुणकामदेवस्य विजयराज्ये लिखितमिदं मागयं स्वपुस्तकं भट्टश्रीश्रीचन्द्रमितस्य शिवादिभ्यो गुरुभ्यो नमः ।

(ख) वारुणपूजा ।

४ पत्राणि । अक्षर – नेवारी ।

पुष्पिका । इति नन्दिकेश्वरमते प्रतिष्ठामन्त्रे वारुणपूजा समाप्ता ।

(ग) वारिशास्त्रम् ।

८ पत्राणि ।

प्रारम्भवाक्यम् । ॐ नमो वरुणाय ।

ब्रह्मविष्णवीशरं रुद्रचन्द्रसूर्य्यप्रधानिषु ।
देवतानाञ्च सर्व्वेषां नमः शक्रपुरोगमान् ॥
ऋग्यजुःसामाथर्व्वाणां षडङ्गपदक्रमात् ।
समुद्धृत्य सर्व्वेषां वारिशास्त्रं प्रवक्ष्यते ॥
तिथिनक्षत्रमासञ्च दिनं लग्नं मुहूर्त्तकम् ।
वारुणेषु च ऋक्षेषु सौम्ययोगयुतेषु च ॥
सौम्येषु दिनवारेषु बुधजीवनिरीक्षिते ।
पूर्व्वेषु पञ्चमासेषु पूर्णलग्नमहोदये ॥
देवतागमनं यत्र वायुस्तत्राभिगामिनः ।
सिद्धियुक्तं भमात्रे च क्षिप्रं भवति उज्ज्वलम् ॥ इत्यादि ।

अन्तवाक्यम् । गर्गभाषितवारिशास्त्रसाराशतक समाप्तः ।

संवत् १९० ( आचाराणङ्कानि । ) वैशाखशुक्लद्वादश्यां — — — ॥

(घ) वारुणयागविधिः ।

३ पत्राणि । अक्षर – नेवारी ।

पुष्पिका । इति नन्दिकेश्वरप्रोक्तायां प्रतिष्ठातन्त्रे वारुणयागविधिः समाप्तमिति ।

(ङ) मन्त्रोद्धारः ।

( आद्यन्तखण्डितः । ) अक्षर – नेवारी ।

मध्यपुष्पिका । मुख्ये मन्त्रोद्धारे षष्ठः पटलः ।

(च) ज्ञानलक्ष्मी वा जयाख्यसंहिता ।

( आदिमध्यान्तखण्डिता । ) अक्षर – नेवारी ।

पुष्पिका । १०२ पत्रे । श्रीजयाख्यसंहितायां चतुराश्रमधर्म्मः द्वाविंशः पटलः ।

१०८ ,, श्रीमदेकायनाचार्य्यनारायणगर्भपादानुगृहीतसाधकचन्द्रदत्तकृतायां ज्ञानलक्ष्म्यां प्रेतश्राद्धविधिस्त्रयो + + ।

१२० ,, श्रीमदेकायन०पञ्चविंशः पटलः प्रायश्चित्तविधिः ।

श्रीमदेकायन०सप्तविंशतिः पटलः ।

(छ) रत्नकरण्डिका ।

द्रोणकृता । विवरणं प्रदत्तम् ।

(ज) अमरकोषः ।

मैथिलमक्षरम् ।

अन्तवाक्यम् । परमभट्टारकेत्यादिराजावलीपूर्व्वकश्रीमदभयसिंहदेवसंभुज्यमानायां तीरभुक्तौ — — — — — — — ।

(झ) प्रतिष्ठापद्धतिः ।

६० पत्राणि । अक्षर – नेवारी ।

प्रारम्भवाक्यम् । ॐ नमः शिवाय ।

शिवं गणं गुरुं वाणीं मोक्षाय विघ्नशान्तये ।
नमामि भुक्तिमुक्त्यर्थं प्रत्येकं वाग्विभूतये ॥
आगमाभ्यासभीरूणां प्रतिष्ठास्वधिकारिणाम् ।
लक्ष्यलक्षणहीनानां क्रियाज्ञानोद्यतात्मनाम् ॥

— — — —

लिङ्गपीठशिलामानं लक्षणोद्धारपूर्व्वकम् ।

गुरुपारम्परायातं शेषं यद् व्यवहारिकम् ।
तन्मया लिख्यते कर्म्म प्रतिष्ठायामनाकुलम् ॥

पुष्पिका । इति प्रतिष्ठापद्धतिः समाप्तः ।
यदा नेपालभूपालानन्तमल्लोऽभिधावति ।
रसग्रहसमायुक्तो श्रुतिः सम्वत् तदा ययौ ॥
कार्त्तिमासे सिते पक्षे द्वितीयायां कुजे दिने ।
कायस्थोदयहर्षेण हर्षेण लिखितं द्रुतम् ॥

— — — — — — —

— — — — — — —

(ञ) महामायास्तवः ।

५ पत्राणि । अक्षर – नेवारी ।

पुष्पिका । इति शिवशक्तिसमरसीभावः महामायास्तवः समाप्तः । संवत् ३९१ आषाढशुक्लपक्षम्यां रविदिने ॥

(ट) मेघदूतटीका ।

( खण्डिता । ) अक्षर – नेवारी ।

(ठ) प्रतिष्ठासारसङ्ग्रहः ।

५९ पत्राणि । अक्षर – नेवारी ।

प्रारम्भवाक्यम् । ॐ नमः श्रीभैरवाय ।
श्रीनाथचरणतरणिर्जयति महामोहतिमिरहरणश्रीः ।
कृता विबुधवृन्दहृदयाम्भोरुहवन — — — र्न येन ॥ (?)
चिन्मयानन्दगम्भीरशिद्धवे(सिन्धवे) शम्भवे नमः ।
स्वशक्तिप्रसरे क्रीडा — — — — — मूर्त्तये ॥
प्रायेणेह कलौ काले दुर्लभागमदर्शनः ।
अतो मूलागमोद्धृत्य प्रतिष्ठापद्धतिः कृता ॥
अथ देवताप्रतिष्ठायां विधानमभिधीयते । इत्यादि ।

अन्तवाक्यम् । इति कुमारीपूजाविधिः ।
समाप्तोऽयं प्रतिष्ठासारसंग्रहः ।

श्रीलक्ष्मीपादपङ्को(पङ्कजो)पजीविना राजपत्याराधेन संग्रहीकृत ॥ (?)
श्रब्दः वह्निहयश सागरश्रति श्रश्विन्यसिते पक्षे — — — ॥

(ड) मेदिनीकोषः ।
मैथिलमक्षरम् । लसं ३११ पौषवदि ।

(ढ) प्रपञ्चसारतन्त्रम् ।
मैथिलमक्षरम् । लसं ४०८ । विवरणं प्रदत्तम् ।

(ण) वेतालपञ्चविंशतिः ।
( नेपालीभाषायाम् । )

(त) विनायकस्तवः ।
( भविष्यपुराणोक्तः । )

(थ) शनैश्वरस्तवः ।
( स्कन्दपुराणीयः । )

१६२४ ।

(क) तत्वसारः ।
श्रक्षर – नेवारी । ९ पत्राणि ।
( विलुप्ताक्षरमिति प्रथमपत्रस्य प्रारम्भवाक्यं दुष्पठनीयम् । )
प्रारम्भवाक्यम् । ३ पत्रे । कार्त्तिकोवाच ।
चाष्टपाशं न वर्त्तव्यं गुरुणा सह शङ्करः ।
तत्वप्रतिकर्त्तव्यो चान्यथा तं — — कुतः ॥
श्रकर्त्ताश्च कथं कर्त्ता – – – कथम् ।
– – – – सर्व्वकर्त्ता कथं भवेत् ॥
ईश्वरोवाच ।
सत्यं भवति मुक्तानामसत्यं पशुचेतसाम् ।
सत्यासत्यं भवेत् तत्वः सत्यः सत्यः षडाननः ॥
पुष्पिका । इति तत्वसारः समाप्तः ।

(ख) ज्ञानकारिका ।
१६ पत्राणि । श्रक्षर – नेवारी ।

पुष्पिका ।

१३ पत्रे । इति ज्ञानकारिकायां धर्म्माधर्म्मविभागे – – द्वितीयः पटलः ।

१६ पत्रे । इति ज्ञानकारः महामत्स्येन्द्रनाथपादावतारितोक्तं – – – तृतीयः पटलः ॥

(ग) चतुर्थीविधिः ।

( विवाहात् परं चतुर्थदिवसस्य कृत्यानि । ) अक्षर – नेवारी ।

(घ) दशकर्म्मविधिः ।

( खण्डितः । ) अक्षर – नेवारी ।

(ङ) विवाहादिपद्धतिः ।

( वाजसनेयिनाम् । ) रामदत्तविरचितः । मैथिलमक्षरम् ।

प्रारम्भवाक्यम् । ॐ नमो महागणेशाय ।

सन्धिविग्रहमन्त्रीन्द्रदेवादित्यतनूद्भवः ।

भूमिपालशिरोरत्नरञ्जिताङ्घ्रिसरोरुहः ॥

सन्धिविग्रहितश्रीमद्वीरेश्वरसहोदरः ।

महामहत्तकः श्रीमान् विराजति गणेश्वरः ॥

श्रीमता रामदत्तेन मन्त्रिणा तस्य सूनुना ।

पद्धतिः क्रियते धर्म्या रम्या वाजसनेयिनाम् ॥

तत्रादौ विवाहः । इत्यादि ।

पुष्पिका । इति महामहत्तकश्रीमद्रामदत्तकारिता वाजसनेयिविवाहादिपद्धतिः समाप्ता । लसं ४१४ । ज्येष्ठवदि ॥

(च) कालज्ञानम् वा कालोत्तरम् ।

३ – २६ पत्राणि । नागराक्षरम् ।

पुष्पिकाः । इति कालज्ञाने – – शतिके दशमपटलः ।

इति कालोत्तरे – – – एकादशः ॥

" द्वादश

" पञ्चदश

" सप्तदश

" अष्टादश ।

(छ) युद्धजयार्णवतन्त्रम् ।

अक्षर – नेवारी ।

प्रारम्भवाक्यम् । – – सूर्य्याय ।

मोहान्धकारमग्नानां जनानां ज्ञानरश्मिभिः ।

कृतमुद्धरणं येन तं नौमि शिवभास्करम् ॥

देव्युवाच ।

भगवन् देवदेवेश शशाङ्क – – – – ।

– – – परमं ज्ञानं विख्यातं महेश्वर ॥

स्वरोदयं परं गुह्यं मुनिना – – – पुनः ॥ इत्यादि ।

अन्तवाक्यम् । इति युद्धजयार्णवतन्त्रे प्रकीर्णाधिकारो नाम दशमपटलः समाप्तः स्वरोदय – – – संवत् ४२६ । ( आक्षराण्यङ्कानि । )

– – – – श्रीश्रीजयतिथिमल्लदेवस्य विजयराज्ये ।

(ज) अनुमानखण्डटीका ।

वाचस्पतिरचिता ।

( खण्डितान्ता । ) मैथिलमक्षरम् । विवरणं प्रदत्तम् ।

(झ) भाषावृत्तिः ।

( आद्यन्तखण्डिता । ) मैथिलमक्षरम् ।

(ञ) अनर्घराघवनाटकम् ।

( आद्यन्तखण्डितम् । ) मैथिलमक्षरम् ।

१६२५ ।

महाभारतम् ।

( खण्डितान्तसभापर्व्वमात्रम् । ) ९३ पत्राणि । अक्षर – नेवारी ।

१६४५ ।

(क) देवीमाहात्म्यम् ।

( देवीकवचसहितम् । ) अक्षर – नेवारी । संवत् ६८९ ।

(ख) रुद्रमाहात्म्यम् ।

( वराहपुराणीयम् । ) अक्षर – नेवारी ।

(ग) देवीमाहात्म्यम् ।

( आदिखण्डितम् । ) नागराक्षरम् ।

(घ) मालिनीस्तोत्रम् ।

( मालिनीच्छन्दसा महामायायाः स्तवनम् । )

११ पत्राणि । अक्षर – नेवारी ।

अन्तवाक्यम् । श्रीमन्नेपालमण्डले । राज्ञा श्रीअभयमल्लदेवे भुज्यमाने ।

पुष्पिका । इति मालिनीस्तोत्रं समाप्तम् ।

इति समस्तश्वस्तव्याप्तिनिश्चयो नाम पीठकास्तोत्रं समाप्तः ।

(ङ) पञ्चपत्राणि ।

( कामशास्त्रीयाणि । )

प्रारम्भवाक्यम् । बाला स्याद् षोडशाब्दा तदुपरि तरुणी त्रिंशतो यावदूर्द्धं

प्रौढा स्यात् पञ्चपञ्चाशदवधिपरमतो वृद्धतामेति नारी ।

दीर्घा कृष्णा च तन्वी चिरविरहवती निम्नकक्षा क्षपा स्युः

स्थूला गौरी च खर्व्वा सततरतिरपि गूढकक्षा घना स्युः ॥ इत्यादि ।

अन्तवाक्यम् । यद् यत्नतो विहन वध्रिताङ्गी स्थितोपरिष्टा पुरुषं च नाभ्या ।

नितम्बिनो विध्यति ताश्च गाढं गुह्यात्मसौ विद्धकमुच्यते तत् ॥ (?)

(च) कामकला ।

कोक्कविरचिता । ११ पत्राणि ।

प्रारम्भवाक्यम् । (मङ्गलाचरणश्लोकौ परित्यज्य लिखितम् ।)

(श्री) कोक्कनाम्ना कृतिना कृतोऽयं

श्रीवैन्यदत्तस्य कुतूहलेन ।

विलोकतां कामकला सुधीरा

प्रदीपकल्पा च रसं विशुम्फः(?) ॥

असाध्यायाः सुखं सिद्धिः सिद्धायाश्चानुरञ्जनम् ।

रक्तायाश्च रतिः सम्यक् कामशास्त्रप्रयोजनम् ॥

पुष्पिकाः । ३ पत्रे । इति आत्माधिकारो नाम परिच्छेदः ।
५ पत्रे । इति चन्द्रकलाभिधानो नाम द्वितीयः परिच्छेदः ।
११ पत्रे । इति नखाधिकारो नाम ।

(छ) तिङ्भेदः ।
२० पत्राणि ।

प्रारम्भवाक्यम् । नमो भवाय ।
सदा – – – – – चित्तं गुणोदधिम् ।
शब्दज्ञानानभिज्ञानां तिङां भेदस्तु कथ्यते ॥

(ज) सत्वबाधाप्रशमनम् ।
( विष्णुधर्म्मीयम् । ) ५ पत्राणि ।

अन्त्यवाक्यम् । संवत् ३२२ आषाढकृष्णाष्टम्यामादित्यवासरे । राज्ञो श्रीमद्धरिसिंहदेवस्य विजयराज्ये लिखनं समाप्तीकृतम् ।

(झ) इन्द्राचीस्तवः ।
अक्षर – नेवारी ।

(ञ) महामायास्तवः ।
अक्षर – नेवारी ।

(ट) ब्रह्मपुराणम् ।
१०७ – १८२ पत्राणि । अक्षर – नेवारी ।

पुष्पिकाः । इत्यादिब्रह्मपुराणे स्वयम्भूऋषिसम्वादे प्रतिमोत्पत्तिः ।
इत्यादिब्रह्मपुराणे स्वयम्भूऋषिसम्वादे उत्कलवर्णनम् ।
इत्यादिब्रह्मपुराणे स्वयम्भूऋषिसम्वादे दक्षयज्ञविध्वंसनम् ।

(ठ) रामायणम् ।
( खण्डितकौटराज्ञसुन्दरकाण्डमात्रम् । ) मैथिलमक्षरम् ।

(ड) मुद्राप्रकाशः ।
(मुद्राराक्षसनाटकस्य टीका । प्रथमाङ्कात् तृतीयाङ्कस्य किंयदंशपर्य्यन्ता ।)
वटेश्वरविरचितः । मैथिलमक्षरम् ।

पुष्पिका । महामहोपाध्यायश्रीगौरीपतितनयश्रीवटेश्वरविरचितमुद्राप्रकाशे प्रथमोऽङ्कः ।

(ढ) महालक्ष्मीमाहात्म्यव्याख्यानसमुच्चयः ।
अक्षर – नेवारी ।

पुष्पिका । इति गालवकृते महालक्ष्मीमाहात्म्यव्याख्यानसमुच्चये षोडशमोऽध्यायः समाप्तः ।
संवत्सरे भूतखपक्षशेषे मासे सिते श्रावणजीववारे ।
पूर्व्वाहिषाढे – – कामतिथौ दिनेषु संपूर्णमिदं हि शास्त्रम् ॥
यस्मिन् नृपेशः स्थितिराजमल्लः समस्तसामन्तभुवं भुनक्ति ।
तस्मिन् समालिख्य वीरादिसिंहो महादिलक्ष्मीं व्रतराजमीशम् ॥

(ण) सप्तमीव्रतकथा ।
अक्षर – नेवारी ।
वह्निशून्यशरे याते नेपालाब्दि विधीयते ।
अशुन्याश्च सिते पक्षे तिथौ काम भृगुदिने ॥ ?

(त) महालक्ष्मीव्रतकथा ।
अक्षर – नेवारी । संवत् ५०२ ।

(थ) कुसुमाञ्जलिप्रकाशः ।
वर्द्धमानरचितः । मैथिलमक्षरम् ।

प्रारम्भवाक्यम् । ( मङ्गलाचरणानन्तरम् । )
न्यायाम्भोजपतङ्गाय मीमांसापारदृश्वने ।
गङ्गेश्वराय गुरवे पित्रे च भवते नमः ॥ इत्यादि ।

पुष्पिका । इति कुसुमाञ्जलिप्रकाशे तृतीयः स्तवकः ।

१६४७ ।

(क) वेदमन्त्राणि ।

(ख) शारदातिलकम् ।
( खण्डितम् । ) बङ्गाक्षरलिखितम् ।

(ग) धातुपाठः ।
( खण्डितः । )

(घ) पारमेश्वरीमततन्त्रम् ।
( खण्डितम् । )

(ङ) धातुज्ञानम् ।
( धातूनां साधनप्रणाली । )

(च) कुशोपदेशटीका ।
श्रङ्करकुमाररचिता । श्रक्षर – नेवारी ।

पुष्पिका । इति कुशोपदेशे नीतिसारे श्रङ्करकुमारकृते श्रप्रमः श्लोकः सम्बन्धः परिच्छेदः समाप्तः परिपूरि सम्पूर्णम् । संवत् ६४४ फाल्गुन प्रतिपदद्दिने भगुवासरे काष्ठमण्डपपुरीपूर्व्वदिग्स्थितमहावौद्दारतलमूले नामवासित-वज्राचार्य्यश्रीवान्धवसेनेन रचितम् ।

(छ) उपयोगक्रमः ।
( व्याकरणशास्त्रम् । )

(ज) ब्रह्मपुराणम् ।
( खण्डितम् । )

(झ) लङ्कावतारः ।
गुप्ताक्षरलिखितः । संवद् २८ । ( श्राक्षराण्यङ्कानि । )

१६४८ ।

(क) गुप्ताक्षरलिखितानि षोड़शपत्राणि ।
( व्याकरणशास्त्रीयाणि । )

सूत्राणि । ग्रीष्मवसन्तात् वा । एताभ्या – – – – भवति ।
ग्रैष्मकं श्रप्यं ग्रैष्मं वासन्तं वासन्तकं । कालादियणां ॥ कालेभ्यः सप्तम्यन्तेभ्यः देय – – – यथाविहितं – – – दयो भवन्ति । ऋणाच्चेत् तत् मासदेयं ऋणं मासिकं ग्रैष्मम् । ऋणमिति किं मासदेया भिक्षा । इत्यादि ।

(ख) सर्व्वज्ञानोत्तरतन्त्रम् ।
४० पत्राणि । गुप्ताक्षरलिखितम् ।

प्रारम्भवाक्यम् । ॐ नमः शिवाय ।

– – – – – – –

समाप्ति चायुते तन्त्रे देवदेवं महेश्वरम् ।

– – – – परां गुह्या पृच्छ – – षडाननः ॥

– – – सर्व्वलोकेशः सर्व्वज्ञः सर्व्वकृत् प्रभोः । (?)

सर्व्वज्ञा + मयज्ञानं सर्व्वज्ञानेषु चोत्तरम् ॥

युक्तं सर्व्वात्मकैर्मन्त्रैः सर्व्वसिद्ध्यर्थसाधकः ।

हिताय सर्व्वसत्वानां वक्तुमर्हस्यशेषतः ॥

– – – – – वाच ।

अथातः सम्प्रवक्ष्यामि सर्व्वशास्त्रसमुच्चयम् ।

सर्व्वज्ञानोत्तरं नाम सर्व्वतन्त्रा – – – ॥

– – – सर्व्वपुष्पेषु सारमुद्धृत्य निर्म्मितम् ।

गन्धर्वं सर्व्वशास्त्रेषु सारमुद्धृत्य शम्भुना ॥

– – – दार्णव निर्म्मथ्य यथा सर्व्वैः सुरासुरैः ।

उद्धृतं अमृतं पूर्व्वं तथेदं तन्त्रमुत्तमम् ॥ इत्यादि ।

( एकापि पुष्पिका न दृष्टा । )

(ग) चरकसंहिता ।

अक्षर – नेवारी । विवरणं प्रदत्तम् ।

(घ) खण्डखाद्यटीका ।

श्रीदत्तरचिता । विवरणं प्रदत्तम् ।

(ङ) त्रिपुराजपहोमविधिः ।

(वामकेश्वरतन्त्रोक्तः ।) ११ – ३५ पत्राणि । अक्षर – नेवारी ।

(च) नागरकसर्व्वस्वम् ।

विवरणं प्रदत्तम् ।

(छ) द्वैतनिर्णयः ।

२ – ४८ पत्राणि । मैथिलमक्षरम् ।

(ज) भोजदेवसङ्ग्रहः ।

अक्षर – नेवारी । विवरणं प्रदत्तम् ।

(झ) महामायाष्टकम् ।

अक्षर – नेवारी ।

अन्तवाक्यम् । सम्वत् ५८४ । पौषशुक्लपञ्चम्यां तिथौ । शुभम् ।

(ञ) दशकर्म्मपद्धतिः ।

६४ पत्राणि ।

प्रारम्भवाक्यम् । ब्रह्मणे नमः ।

अथ गर्भाधानविधिः ।

रजस्वला – – – – – । अष्टमे दिने प्रभाते स्नानं । इत्यादि ।

(ट) गुह्यसिद्धिशास्त्रम् ।

५९ पत्राणि । अक्षर – नेवारी ।

प्रारम्भवाक्यम् । ॐ नमः श्रीभैरवाय ।

आदिवर्गक्रमान्तस्थं युगसिद्धचतुष्टयम् ।

अष्टाष्टकक्रमायान्तं तं वन्दे कुलनायकम् ॥

श्रीश्रीपीठे मयान्तस्थे गुह्यपीठे परिस्थितः ।

अनन्तचक्रमारूढा सर्व्ववर्णविभूषितम् ॥

– – – – – – –

देव्युवाच ।

गुह्यसिद्धिक्रमं देव समयाचारलक्षणम् ।

सबाह्याभ्यन्तरा ब्रूहि नाथ सर्व्वजगत्पते ॥ इत्यादि ।

अन्तवाक्यम् । इह लोके च दारिद्रं मृते च पशुतां नयेत् ॥

संवत् ५१४ दुराषाढमासे शुक्ले पञ्चम्यै

श्रीश्रीभक्तग्रामे जयथितीराजमल्लदेवस्य विजयराज्ये श्रीभोगेश्वरकुटुम्बजक्रमाचार्य्यलिखिता ...... श्रीगुह्यसिद्धिशास्त्र समाप्तः ॥

(ठ) भैरवार्चनम् ।

१५ पत्राणि । अक्षर – नेवारी ।

(ड) नैषधचरितम् ।

खण्डितनवमसर्गपर्य्यन्तम् । मैथिलाक्षरम् ।

(ढ) शारदातिलकम् ।
(आदिमध्यखण्डितम् ।) वङ्गाक्षरलिखितम् । शाके १३३६ ।

(ण) मुद्राराक्षसनाटकम् ।
अक्षर – नेवारी ।

अन्तवाक्यम् । श्रेयोऽस्तु संवत् ४९१ । भाद्रपदशुक्लतृतीयायां तिथौ .. .. .. .. .. परमेश्वरपरमभट्टारकपरमधार्म्मिकः श्रीश्रीजयार्ज्ज .. नां विजयराज्ये श्रीनेपालमण्डले । .. .. .. .. .. । श्रीललितापुरे श्रीमाणिगलोत्तरे महाविहारे श्रीयोखाच्छ्विहाराधिवासिनः .. .. .. .. .. लेखिक-रत्नाङ्कुरश्रीगोमेन्द्रचन्द्रेन सत्वोपकारार्थहेतुना स्वहस्तेन लिखितं .. ॥

१६९३ ।

(क) अभिसमयालङ्कारः ।
२३ पत्राणि । अक्षर – नेवारी ।

(ख) अष्टसाहस्रिका ।
(खण्डिता ।) अक्षर – नेवारी ।

(ग) महाभारतम् ।
(खण्डितशल्यगदापर्व्वात्मिकम् ।) अक्षर – नेवारी ।

(घ) विद्यापीठः ।

पुष्पिका । इति विद्यापीठे गुह्यकालिकेन्द्रकसारे (?) तृतीयपरिच्छेदः समाप्तः ।

(ङ) कृद्भाष्यम् । (?)
१३ पत्राणि । गुप्ताक्षरलिखितम् ।
सूत्राणि यथा – आतश्चोपसर्गे । आकारान्ताद्धातोः उपसर्गे उपपदे अङ् प्रत्ययो भवति । स्त्रियां प्रख्या संस्था प्रभा प्रधा उपधा । ईषिग्रन्थ्यासिवन्दिविदिकारितान्तेभ्यो युः । ईषि ग्रन्थि आसि वन्दि विदि कारितान्ता इत्येतेभ्यः स्त्रियां युप्रत्ययो भवति । ईषा......आसना वन्दना वेदना कारणा........ ॥
कीर्त्तीच्छोक्तिश्च । कीर्त्ति इषु इत्येतयोः क्ति प्रत्ययो भवति । युबाधि-कृतः । कीर्त्तिः कीर्त्तना ।

पुष्पिका । कृद्भाष्यतः प्रथमोऽध्यायः समाप्तः ।

———•———

# CATALOGUE

OF

# PALM-LEAF MANUSCRIPTS

IN THE COLLECTION RECENTLY MADE BY

HIS EXCELLENCY

MAHĀRAJĀ SIR BĪR SHAMSHER JANG BĀHĀDUR RĀṆĀ,

PRIME MINISTER AND COMMANDER-IN-CHIEF OF NEPAL.

---

२

(क) दिव्यावदानम् ।

(रूपवत्यवदान – कुणालावदान – पांशुप्रदानावदानैः समेतम् ।)

(ख) कारण्डव्यूहः ।

अक्षर – नेवारी ।

(ग) अष्टसाहस्रिकाप्रज्ञापारमिता ।

अक्षर – नेवारी ।

(घ) जातकमाला ।

(शृङ्गजातक – हंसजातक – यक्षजातक – व्याघ्रीजातकानि ।)

६

खण्डखाद्यकम् ।

ब्रह्मगुप्तरचितम् । १५ पत्राणि । अक्षर – नेवारी ।

प्रारम्भवाक्यम् । ॐ नमः सूर्य्याय ।

प्रणिपत्य महादेवं जगदुत्पत्तिस्थितिप्रलयहेतुम् ।

वक्ष्यामि खण्डखाद्यकमाचार्य्यार्य्यभटतुल्यफलम् ॥

प्रायेणार्य्यभटेन व्यवहार प्रतिदिन यतो लक्ष्यम् ।

उद्वाहजातकादिषु तत्समलघुतरोक्तिरतः ॥ (?) इत्यादि ।

अन्तवाक्यम् । इति खण्डखाद्यके महाकरणे परिलेखाधिकारः समाप्तः । समाप्तञ्चेदं खण्डखाद्यकम् । - - - - - - - श्रेयोऽस्तु संवत् ४०० भाद्रपदकृष्ण-द्वितीयापरतृतीयायां तिथौ - - - - - - ॥

४

तिङ्भेदः ।

प्रारम्भवाक्यम् । ॐ नमो वागीश्वराय ।
मञ्जुघोषं प्रणम्यादौ बालानां बुद्धिवृद्धये ।
आख्यातानभिधान - - - यं तु कथ्यते ॥
तत्र लडादीनां स्थाने तिबादय आदेशा भवन्ति । के पुनस्ते लडादयः । लट् लिट् लुट् लृट् लोट् इति पञ्च - - टित् । इत्यादि ।

अन्तवाक्यम् । इति ६ समाप्तः । संवत् ५४० ज्येष्ठशुक्ल १३ शुभ - - ।

१२

(क) द्वैतनिर्णयः ।
वाचस्पतिमिश्ररचितः । मैथिलमक्षरम् ।

(ख) विवादनिर्णयः ।
वाचस्पतिमिश्ररचितः । मैथिलमक्षरम् ॥

१४

(क) शताधिकाष्टाशीतिपत्राणि ।
( वैद्यशास्त्रीयानि । ) मैथिलमक्षरम् ।

प्रारम्भवाक्यम् । ॐ महागणेशाय नमः ।
विबुधार्थसाधनधिया दुग्धाब्धेरम्टतमुद्धृतं येन ।
विधुतजराव्याधि - - स दिशतु धन्वन्तरिः सिद्धिम् ॥
रोगमादौ परीक्षेत ततोऽनन्तरमौषधम् ।
ततः कर्म्म भिषक् पश्चाद् ज्ञानपूर्व्वं समाचरेत् ॥ इत्यादि ।
( क्वापि पुष्पिका न दृष्टा । )

(ख) भागवतटीका ।

( एकादशद्वादशस्कन्धयोः । ) मैथिलमक्षरम् ।

प्रारम्भवाक्यम् । ॐ गणपतये नमः ।

प्रागविस्तोपसंहारो वर्णितोऽनेकधा बुधा ।

मुक्तयेकादशे स्कन्धे ध्यायैकत्रिंशतोच्यते ॥ (?)

तत्रज्ञानकर्म्मनिष्ठाभेदात् प्रकरणं द्वयं पञ्चाध्यायाः ।

तत्राद्येऽध्याये वर्ण्यो यदूनां युगपत्क्षयः ।

विप्रशापो यदुवने विप्रशापाद् विमुक्तये ॥ ?

तत्रादौ तत्र प्रसिद्धार्थं समनन्तरस्कन्धार्थं – – वदति ।

कृत्वेति यदिष्टं शेषभूभारहरणाय वैरवत्तरं कलिं कलहमन्येषां जनयन् भुवोभारं निरहरदिति ॥ इत्यादि ।

अन्तवाक्यम् । लसं ३९३ मार्ग शुदि १४ शनौ एदिने पोखारिग्रामे श्रीरघुपतिना लिखितेयं पुस्तीति ।

१५

कामन्दकीयनीतिसारः ।

८१ पत्राणि । मैथिलमक्षरम् ।

अन्तवाक्यम् । . शुभमस्तु श्रीरस्तु ।

गौड़भूमिपतेरब्दे नेत्रवह्न्यब्धिभूषिते ।

वैशाखे कृष्णसप्तम्यामिदं कश्चिदलीलिखत् ॥

१७

नलचरितटीका ।

मैथिलमक्षरम् ।

पुष्पिकाः । २४ पत्रे । इति मल्लिहरीश्वरकृतौ नलचरितटिप्पन्यां नवमः सर्गः ।

२२९ पत्रे । विक्रमादित्यचरिते गद्यपद्यमयग्रन्थविशेषकर्तुर्मल्लिहरीश्वर(स्य)-कृतौ नलचरितटिप्पनिकायां २२ सर्गः ।

२३० पत्रे । योगिनीचन्द्रकलिते शाके माघे समापिता ।

हरीश्वरसमाख्यातेर्व्याख्येयं कृतिनां मुदे ॥

२६

(क) शिवधर्म्मोत्तरम् ।

अक्षर – नेवारी ।

(ख) शिवधर्म्मसङ्ग्रहः ।

अक्षर – नेवारी ।

(ग) वृषसारसङ्ग्रहः ।

अक्षर – नेवारी ।

(घ) धर्म्मपुत्रिका ।

११ पत्राणि । अक्षर – नेवारी ।

प्रारम्भवाक्यम् । ॐ नमः शिवाय ।

वन्दे देवं पुराणं शिवममरगुरुं भूतलस्थेन मूर्द्धा
नित्यं शान्तं सुसूक्ष्मं त्रिभुवननमितं सर्व्वसत्वैकनाथम् ।
निःसङ्गं निर्व्विकारं प्रजननमरणक्लेशदोषैर्विमुक्तं
योगाभ्यासैकवेद्यं त्रिगुणविरहितं त्र प्र – – – रूपम् ॥

– – – – – – –

नमस्कृत्य प्रवक्ष्यामि ईप्सितां धर्म्मपुत्रिकाम् ।
सिद्धिं प्राप्नोति योगस्य युञ्जन् योगी न संशयः ॥

नवोत्तराशीतियुते शतेऽब्दे
आषाढशुक्लस्य तिथौ तृतीये ।
श्रीशङ्कराख्ये जयति क्षितीन्द्रे
श्रीयल्लसंघोत्तरटोलकेयः ॥ ?

पुष्पिका । धर्म्मपुत्रिकायां सिद्ध्युपायो नाम षोडशमोऽध्यायः समाप्तः ।

पुष्पिकाः । धर्म्मपुत्रिकायां साधनप्रकरणं नाम प्रथमोऽध्यायः ।

धर्म्मपुत्रिकायामासनप्रकरणं नाम द्वितीयः पटलः ।

" धारणाप्रकरणं नाम तृतीयोऽध्यायः ।

" ध्यानमार्गप्रकरणं नाम चतुर्थः पटलः ॥

" सूक्ष्मान्तरायो नाम पञ्चमः पटलः

" महासूक्ष्मान्तरायो नाम ६ मुः अध्यायः ।

| | | | | |
|---|---|---|---|---|
| धर्म्मपुत्रिकायां | प्रमाश्ज्ञान्तरायो नाम | ७ | मः | ग्रध्यायः । |
| ,, | प्रतिभाद्यन्तरायो नाम | ८ | ,, | ,, |
| ,, | जया नाम | ९ | ,, | ,, |
| ,, | चिकित्सा नाम | १० | ,, | ,, |
| ,, | — लिङ्गं नाम | ११ | शः | ,, |
| ,, | ध्रुवलिङ्गं नाम | १२ | ,, | ,, |
| ,, | छुद्रापायो ? नाम | १३ | ,, | ,, |
| ,, | विनाशः | १४ | ,, | ,, |
| ,, | प्रत्यानयनं नाम | १५ | ,, | ,, |
| ,, | षिद्धापायो नाम | १६ | ,, | ,, |

---

# DETAILED DESCRIPTION

OF SOME OF THE

# RARE PALM-LEAF MSS.

IN THE

## DURBAR LIBRARY, NEPAL.

( १६३४ । ज । ) अनुमानखण्डटीका . By वाचस्पति . 12×1 inches. Folia, 82. Lines, 6 on a page. Extent, 2,091 çlokas. Character, Maithila. Date, (?) Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमः शिवाय ।

- - - - - विकर्षणस्फुरितगोपसीमन्तिनी-
पयोधरमहीधरस्खलितयमग्रहकृचेतसः ।
विनम्रसुरधोरणीमुकुटहृष्टपादश्रियः
पुनन्तु पदपांशवः सपदि कंसविध्वंसिनः ॥
दूरीभूतं द्वैतचिन्तासुराणामेकीभूतं सारभूतं सुराणाम् ।
आत्मीभूतं गोपसीमन्तिनीनां श्यामीभूतं ब्रह्म निर्व्याजमीडे ॥
अरूपतः कारणतो विषयात् फलतः क्रमात् ।
- - - - - परार्द्धश्च कथोपकरणान्वितम् । (?)
अथ प्रत्यक्षमूलकत्वात् तदनन्तरमनुमानं निरूप्यते । इत्यादि ।

**End.** अतएवाशक्तिसूचकतया दोषत्वे अनुवादमोक्षत्वं दूषणोपादकस्य नाप-
लपेदिति रहस्यम् । ( अतः खण्डिता )

विषयः । आराध्य यादवकिशोरमतिप्रयत्ना-
दभ्यस्य गोतममतं सह जैमिनीयम् ।
सारं विविच्य मतयोरनयोरशेषं
वाचस्पतिर्विषदयत्यनुमानमार्गम् ॥

(१३६१ । च ।) कर्म्मक्रियाकाण्डः. By सोमशम्भु. 8×1½ inches. Folia, 111. Lines, 5 on a page. Extent, 2,220 çlokas. Character, Newārī. Date, (?) Appearance, old. Prose and verse. Generally correct.

Beginning. ॐ नमः शिवाय ।

विश्वबोधविधातारं विश्वविज्ञानविग्रहम् ।
विश्वरूपं परं नत्वा विशेषं शिवमव्ययम् ॥
संवीक्ष्य शिवशास्त्राणि सदाचार्य्योपदेशतः ।
क्रमान्नित्यादिकं वक्ष्ये क्रमबोधविवृद्धये ॥
प्रातरुत्थाय सञ्चिन्त्य शिवाय शिवमक्षरम् ।
उत्सृजेन्मलमूत्रादि गत्वा देशं यथोचितम् ॥ इत्यादि ।

End. अथ वृक्षप्रतिष्ठायां + + + + क्षितेः ।
आरामोद्यानयोर्व्वृत्तात् पूर्व्वोशदिशि मण्डपे ॥
स्नपनं पूजनं न्यासं स्नेन स्नेन ह्युनाचरेत् । (?)
वृक्षाधिदेवताग्नौ × × × × पूर्णाहुतिं शुभम् ॥
कर्त्ता सन्तोषयेत् पश्चादाचार्य्यं ब्राह्मणानपि ।
बन्धून् मित्राणि दीनांश्च भोजयेत् तोषयेदपि ॥
श्रीगोननामा शिवतुल्यधामा
तस्याथ शिष्यो विमलेशनामा ।
तस्यापि शिष्यस्तु शिवः शिवात्म-
शिष्योऽभवत् × × स सोमशम्भुः ॥
× × × × ×
दिक्चक्रवालोदरलब्धकीर्त्तिः ।
शिवाश्रमाङ्को (?) मुनिवृन्दवन्द्य-
श्चक्रे क्रियाकाण्डपदक्रमावलीम् ॥
क्व तावकीनागमबोधविज्ञता
क्व शैवा × × × ।
× × × × ×
× × × × × ॥

याते॑ऽब्दे त्रिशते स च षट्सहिते भूयो विंशत्य × श्रावये मासि द्वादशी-
तिथौ श्रीश्रारिमल्लदेवनृपे × × × × संस्थिते × × × पूर्ण
पुरे × × ।

---

( २२६ । च । ) कालोत्तरतन्त्रम् . 8×1½ inches. Folia, 39. Lines, 5 on a page. Extent, 609 çlokas. Character, Nāgara. Date, (?). Appearance, old. Verse. Correct.

**Beginning.** ( प्रथमपत्रं नास्ति तेन द्वितीयपत्रस्थं द्वितीयपटलस्य प्रारम्भवाक्यं प्रदत्तम् ।)

कार्त्तिकेय उवाच ।

अन्तःकरणविन्यासं भूतशुद्धिस्तथैव च ।

भूतशुद्धिं पुरा कृत्वा + + + + ॥

आप्यायनं कथं तेषां कथयस्व यथार्थतः ॥

ईश्वर उवाच ।

चैतन्यं मोक्षयेत् पूर्व्वं दहनं तदनन्तरम् ।

आप्यायनं तृतीयन्तु प्राणायामश्च यः स्मृतः ॥ इत्यादि ।

**End.** + + + + + + + + ।

+ + + + न भूयो जन्मसम्भवः ॥

**Colophon.** इति कालोत्तरे महातन्त्रे सप्तशतिकद्वंद्ववाचो (?) नाम द्वात्रिंशत्तितमः पटलः । समाप्तं चेदमखिल .... कालोत्तरं महाशास्त्रमिति ।

विषयः । इति कालोत्तरे महातन्त्रे सप्तशतिके मन्त्रोद्धारे १ मः पटलः ।

„ „ „ „ अन्तःकरणो नाम २ यः „

„ „ „ „ ३ „ „

„ „ „ „ भस्मस्नानं ४ र्थः „

„ „ „ „ यजनविधिः ५ मः „

„ „ „ „ अग्निकार्य्यविधिः ६ ष्ठः „

„ „ „ „ ७ मः „

„ „ „ „ दीक्षाप्रकाशे ८ „ „

„ „ „ „ ९ „ „

इति कालोत्तरे महातन्त्रे सप्तशतिके नाड़ी + नाम १० मः पटलः ।

| | | | | | | |
|---|---|---|---|---|---|---|
| ,, | ,, | ,, | ,, | अग्निसोमात्मकं | ११ शः | ,, |
| ,, | ,, | ,, | ,, | सृष्टिसंहारकं | १२ ,, | ,, |
| ,, | ,, | ,, | ,, | | १३ ,, | ,, |
| ,, | ,, | ,, | ,, | प्रासादनिदर्शनः | १४ ,, | ,, |
| ,, | ,, | ,, | ,, | | १५ ,, | ,, |
| ,, | ,, | ,, | ,, | | १६ ,, | ,, |
| ,, | ,, | ,, | ,, | | १७ ,, | ,, |
| ,, | ,, | ,, | ,, | | १८ ,, | ,, |
| ,, | ,, | ,, | ,, | तत्त्वनिर्णयः | १९ ,, | ,, |
| ,, | ,, | ,, | ,, | संक्रान्तिः | २० ,, | ,, |
| ,, | ,, | ,, | ,, | | २१ ,, | ,, |
| ,, | ,, | ,, | ,, | शक्तिसमरसः | २२ ,, | ,, |
| ,, | ,, | ,, | ,, | कुमारिकाप्रकरणे | २३ ,, | ,, |
| ,, | ,, | ,, | ,, | कालचक्रं + + | २४ ,, | ,, |
| ,, | ,, | ,, | ,, | प्रत्यङ्गयजनं | २५ ,, | ,, |
| ,, | ,, | ,, | ,, | | २६ ,, | ,, |
| ,, | ,, | ,, | ,, | | २७ ,, | ,, |
| ,, | ,, | ,, | ,, | | २८ ,, | ,, |
| ,, | ,, | ,, | ,, | | २९ ,, | ,, |
| ,, | ,, | ,, | ,, | | ३० ,, | ,, |
| ,, | ,, | ,, | ,, | | ३१ ,, | ,, |
| ,, | ,, | ,, | | सप्तशतिकसंग्रहो नाम(?) | ३२ ,, | ,, |

---

( १०७७ । ज । ) कीर्त्तिपताका . By विद्यापति. $10 \times 1\frac{1}{2}$ inches. Folia, 38, (of which leaves 8–29 are missing). Lines, 5 on a page. Extent, 618 çlokas. Character, Maithila. Date, Lakṣmaṇa Era, 426. Appearance, old. Verse. Incorrect.

Beginning. श्रीमहागणेशाय नमः ।

नित्यो विश्रुशाय विलम्बितकटान्तरक्तो (?)
देहार्द्धबद्धरमणीरमणीयमूर्त्तिः ।
कौतूहलादिव निकुञ्जपदं निविश्य
शृङ्गारवामयतु वो नवचन्द्रचूड़ः ॥

अटन्तो कण्ठसंसक्ता रसशोकरवर्षिणी ।
भारती मालतीमालोपमेयं मे विराजताम् ॥
निघ्नन्तं विघ्नानिह तारकर्णतालेन ।
लम्बोदरमवलम्बे लम्बोरमवदनमेकदेवमहम् ॥

दोहा । परिहृग्रमखडलिवह्वगुवे भौषमकौरमुहेन ।
वाणौमहुरमहग्धरम पिश्रउ स्वश्रनसवनेन ॥ (?) इत्यादि ।

End. एवं श्रीशिवसिंहदेवनृपतेः संग्रामजातं यशो
गायन्ति प्रतिपत्तनि प्रतिदिशं प्रत्यङ्गनं सुभ्रुवः ।
एतत् कीर्त्तिप + + + + + वाणी च विद्यापते-
राचन्द्रार्कमियं विराजत सुखाम्भोजेषु + + सदा ॥

Colophon. इति श्रीविद्यापतिविरचितायां कीर्त्तिपताकायां चतु - - शः सम्पूर्णः ॥
शुभमस्तु । लसं ४२६ जेठवदि शुक्रे - - - यं पुरनगरे श्रीहोरिलख-
ल्लिखिता (?) पुस्तीति । .. .. .. .. .. ॥

विषयः । शिवसिंहनृपतेः कीर्त्तिकलिताः काश्चित् दोहाः ।

---

(१०७८ । घ ।) कुब्जिकामतम्. 8×2 inches. Folia, 12. Lines, 5 on a page. Extent, 180 çlokas. Character, Newārī. Date, Newār Era, 280. Appearance, old. Verse. Incorrect.

Beginning. ॐ नमो महाभैरवाय ।
नित्योदितश्चिदानन्दं सर्व्वगं सर्व्वसंस्थितम् ।
कामरूपपरं देवं श्रीनाथं प्रणमाम्यहम् ॥
मेरुपृष्ठे सुखासीनं भैरवं विगतामयम् ।
गणकोटिसमाकीर्णं योगिभिः परिवारितम् ॥
प्रणिपत्य महादेवं इदं वचनमब्रवीत् ॥
चन्द्राधिपे महाद्वीपे कामाख्यापीठमुच्यते ।
किं नु कार्य्यं महादेव प्रहं त्वश्च इहागता ॥ (?)
श्रीभैरव उवाच ।
कैलासपीठमध्यस्थं कारणानन्दविग्रहम् ।
ब्रह्माद्या देवता सर्व्वे मोदयामि त्वया सह ॥ (?) इत्यादि ।

End. खेचरीणामियं मुद्रा स्वस्वप्रत्ययकारका ।
– – – – – – – चराचरमिदं स्मृतम् ॥
चराचरमिदं तत्वं षट्तत्वं परिमण्डितम् ॥

Colophon. इति सार्द्धशतिका श्रीकुब्जिकामतसमाप्तमिति । मङ्गल महाश्रीः ।
संवत् २८० पौषकृष्ण एकादश्याम् ।

विषयः । पीठ-पीठदेवतानामसंकीर्त्तनम् । कतिपयमुद्रालक्षणञ्च ।

---

(२८५ । क ।) कुब्जिकामतम्. (कुलालिकाम्नायान्तर्गतम्.) 10×1½ inches. Folia, 152. Lines, 6 on a page. Extent, 2,964 çlokas. Character, Newārī. Date, Newār Era, 299. Appearance, old. Verse. Correct.

Beginning. ॐ नमो महाभैरवाय ।
सङ्कर्त्ता मण्डलान्ति क्रमपदनिहितानन्दशक्तिः सुभीमा
सृष्ट्याद्यं चतुष्कं अकुलकुलगतं पञ्चकञ्चान्यषट्कम् ।
चत्वारः पञ्चकोन्यः पुनरपि चतुरस्तत्वतो मण्डलेदं
संसृष्टं येन तस्मै नमत गुरुतरं भैरवं श्रीकुजेशम् ॥ १
श्रीमद्धिमवतः पृष्ठे त्रिकूटशिखरानुगम् ।
सन्तानपुरमध्यस्थमनेकाकाररूपिणम् ॥
– – – त्रिप्रकारन्तु त्रिशक्ति त्रिगुणोज्वलम् ।
चन्द्रसूर्य्यकृता – – म्वह्निदेदीप्यवर्चसम् ॥
.. .. .. .. .. .. ..
कार्य्यकारणभेदेन किञ्चित्कालमपेक्षया ।
तिष्ठते भैरवीशानं मौनमादाय निश्चलम् ॥ (?)
तत्र देवगणाः सर्व्वे सकिन्नरमहोरगाः ।
कुर्व्वन्ति कलकलारावं समागत्य समीपतः ॥
श्रुत्वा कलकलारावं को भवान् किमिहागतः ।
हिमवान् तु प्रसन्नात्मा गतोह्यन्वेषणं प्रति ॥ इत्यादि ।

End. नानेन रहिता सिद्धिर्भुक्तिमुक्तिर्न विद्यते ।
निराधारपदं ह्ये तत् तद्धेश्वरमं पदम् ॥ (?)

Colophon. इति कुलालिकाम्नाये श्रीमत्कुब्जिकामते समस्तस्थानावबोधसर्व्वा-निर्द्देशो (?) नाम पञ्चविंशतिमः पटलः समाप्तः। संवत् २९९ फाल्गुन कृष्ण।

विषयः। इति श्रीकुलालिकाम्नाये श्रीकुब्जिकामते चन्द्रद्वीपावतारो नाम। १पटलः।

इ० आपर्य्याये कौमार्य्यधिकारो नाम। २।

इ० मन्थानभेदप्रचाररतिसङ्गमो नाम। ३।

इ० मन्त्रनिर्णयो गह्वरमालिन्योद्धारे। ४।

इ० इच्छासमयोद्धारः शब्दराशिमालिनीतत्त्वप्रत्यासिनिर्णयः। ५।

इ० जयमुद्रानिर्णयः। ६।

इ० मन्त्रोद्धारे षडङ्गविद्याधिकारो नाम। ७।

इ० स्वच्छन्दशिखाधिकारो नाम। ८।

इ० शिखाकल्पैकदेशो (?) नाम। ९।

इ० देव्या समयो (?) नाम मन्त्रोद्धारे। १०।

इ० षट्प्रकारनिर्णयो नाम। ११।

इ० षट्प्रकाराधिकारवर्णनो नाम। १२

इ० दक्षिणषट्कपरिज्ञानो नाम। १३।

इ० देवीदूतीनिर्णयो नाम। १४।

इ० षट्प्रकारे योगिनीनिर्णयः। १५।

इ० षट्प्रकारे महानन्दमचको नाम। १६।

इ० पदद्वयहंसनिर्णयो नाम। १७।

इ० चतुष्कस्य पदभेदम्। १८।

इ० चतुष्कनिर्णयो नाम। १९।

इ० चन्द्रद्वीपावतारो नाम। २०।

इ० द्वीपाम्नायो नाम। २१।

इ० समस्तव्यस्तव्यापिनिर्णयो नाम। २२।

इ० त्रिःकालमुत्क्रान्तिसम्बन्धः। २३।

इ० तद्ग्रहपूजाविधिपवित्रारोहणम्। २४।

इ० समस्तस्थानावबोधसर्व्वानिर्द्देशो (?) नाम। २५।

---

(७३६। ख।) कौशल्यकुसुमावली. By राजब्रह्मवर्द्धन. 10×1 inches. Folia, 116. Lines, 5 on a page. Extent, 1,740 çlokas. Character, Nāgara. Date, (?). Appearance, old. Prose and verse. Generally correct.

Beginning. ॐ नमो गणपतये ।

सिन्दूरपूरकुम्भस्थलरविविध्वस्तविघ्नघनतिमिरम् ।
गगननिभं गजवदनं नमामि सत्कार्यसिद्धये शुद्धम् ॥
शुभाशुभपरिज्ञानं विना लोकोऽवसीदति ।
अवसन्ने कुतस्तस्मिन् धर्म्मकामार्थसिद्धयः ॥

यतो हि पुरुषार्थसंपत्तिस्तत्कुलं अशुभं पुनरेतद् विपरीतफलं(?) ते च नैसर्गिकानुषङ्गिकभेदेन प्रत्येकं द्विविधम् । पूर्व्वजन्मकर्म्मानुस्यूतं ग्रहदशापाकादिकं निसर्गजम् । कर्म्मानुष्ठानलक्षणविशेषविपाकं आनुषङ्गिकम् । .. .. .. .. .. अतएव वरगुरुचरणारविन्दद्वन्द्ववन्दनानन्दनपुर्संमोहद्युमणिसंबोधितसद्ज्ञानावबोधराजीव – – – रजोराजिविराजमानो राजब्रह्मवर्द्धनोऽवधीरितविषयविज्ञानरसोऽपि .. .. .. ... श्रीमद्ब्रह्मयामलकोशलामतनरपतिजयचर्य्यावराहहोराशाकुनादिशास्त्राणामात्ममतिभाजनानुसारसारसमुच्चयं कौशल्यकुसुमावलीनामनिरवद्यपद्यगद्यहृद्यसंदर्भं विधास्ये ॥

विबुधमतबुधजनोक्तज्योतिर्षविपिनेषु सुमनसां स्तगियम् ।
चम्पूसूत्रग्रथिता शिवोपयोगाय भवतु भुवि भविनाम् ॥ इत्यादि ॥

End. अतः परं निशोधेमं शचीयागविधिं शुभम् ।
प्रशस्ततिथिनक्षत्रलग्नवारेषु शिल्पिना ॥

(अतः परं खण्डिता ।)

विषयः। इति कौशल्यकुसुमावल्यां शारीरतत्त्वस्वरोदयो नाम प्रथमा ग्रन्थना ।
इ० वर्षस्वरावचयो नाम । २ ।
इ० राजब्रह्मसंग्रथितायां कौशल्यकुसुमावल्यां विचित्रो नाम प्रथमांशः समाप्तः ॥

(ततो द्वितीयांशः स च खण्डित इति नोपलब्धा काचन पुष्पिका भागस्यैतस्य ।)

( १६४८ । घ । ) खण्डखाद्यटीका. By श्रीदत्त. 10 × 2 inches. Folia, 136. Lines, 6 on a page. Extent, 3,060 çlokas. Character, Newārī. Date, Newār Era, 654. Appearance, tolerable. Prose. Correct.

Beginning. ॐ नमो नारायणाय ।

यः कौमुदीकुमुदधौतककुन्दवृन्दशुभ्राभ्रशङ्खशरदभ्रसमानकान्तिः ।
ग्रीवाग्रविस्फुरणनिर्गतदन्तभाभिः श्वेतं वसन् स मम तुष्यतु वाहवक्त्रः ॥

वेदन्यायकणादपाणिनिमतज्योतिःपुराणागम-
च्छन्दोनाटककाव्यकोषभरतालङ्कारपाथोनिधिः ।
ग्रथन्मान्यवदान्यधन्यविलसत्सौजन्यपुण्योन्नतः
श्रीमानेष नगेश्वरो विजयते सूर्य्याकरत्नाकरः ॥

तत्सूनुना सकलसज्जनसन्नतेन
श्रीदत्तशर्म्मगुणिना गुणिनां मतेन ।
ब्रह्मप्रणीतगणितानुगतानवद्यां
व्याख्यायते स्फुटगिरा वरखण्डखाद्यम् ॥

तत् प्रथमतोऽस्य शास्त्रस्य सम्बन्धाभिधेयप्रयोजनानि प्रवृत्त्यङ्गान्युच्यन्ते। तत्र श्रीब्रह्मविनिःसृतो वेदस्याङ्गं ज्योतिःशास्त्रमिति सम्बन्धः ॥ .. .. .. .. .. .. .. .. .. ..

अथ ब्रह्मसोमसूर्य्यवसिष्ठरोमकादीनां बहून् सिद्धान्तान् पुराणादिवद् दत्तादिस्मृतिवच्च कुत्रापि कुत्रापि विरोधिनो दृष्ट्वा बहुदृश्वना आचार्य्यार्य्यभटेन यो निबन्धरूपो व्यवहारिकः शिष्यधीतन्त्रसिद्धान्तः कृतः तस्य बहुतराङ्कक्रियत्वात् तेन दुःखरूपा ग्रहगतिरित्यभिसन्धाय जिष्णुसुतब्रह्मगुप्तोऽल्पाङ्कक्रियं करणं कर्त्तुमुद्यतः खण्डमिश्रितेन खाद्येन यथा तृप्तिः सुखस्य भवति + + + + + + । इत्यादि ।

End. एवं कृते गाढ़वबीजशुद्धा ग्रहा भवन्ति। अपरेषान्तु बीजानां मुञ्जालस्यैवानुगमनात् मुञ्जालोपग्रहेणैव गतार्थत्वाद् व्याख्यानं न कृतमिति ॥

लम्बाक्षकर्णापश्वाङ्कुकराङ्गुलादि-
विक्षेपवर्गगणचारितसैर्विमूढाः ।

श्रीदत्तशर्म्मसुविकाशितखण्डखाद्य-

मास्वाद्य यान्तु सुधियो गणकोत्तमत्वम् ॥

Colophon. इति मिश्रमहोपाध्यायश्रीनगेश्वरात्मजश्रीश्रीदत्तकृतौ खण्डखाद्य-टीकायां गाडवबीजव्याख्यानम् । समाप्ताचेयं टीका ।

श्रीमन्नेपालिकः स्वस्ति श्रेयोऽस्तु संवत् ६५४ कार्त्तिकमासे शुक्लपक्षे दशम्यां तिथौ शतभिषपरपूर्व्वभद्रनक्षत्रे सोमवासरे श्रीभक्तपत्तने श्रीश्रीजीतमल्लदेवश्रीश्रीप्राणमल्लदेवौ विजयराज्ये देवज्ञजयकीर्त्तिराजेन स्वार्थं लिखितेयं पुस्तिकेति ।

विषयः । ब्रह्मप्रणीतखण्डखाद्यनामकस्य ज्योतिर्ग्रन्थस्य व्याख्यानम् ।

---

( ३८२ । क । ) गीतदिगम्बरम् . By वंशमणि . 10 × 1½ inches. Folia, 37. Lines, 5 on a page. Extent, 699 çlokas. Character, Maithila. Date, Saka, 1577. Appearance, old. Verse. Generally correct.

Beginning. ॐ नमस्तस्यै ।

चिन्ताकामकलाकलापविषये भोगाय योगासनं

जातेयं जपमालिकापि करयोः शृङ्गारहारो मम ।

पार्व्वत्याः प्रथमे समागमविधावित्यस्तु वः संस्तुवन्

पञ्चेषो + + पौरुषाणि जगतामादिर्म्मदे पूरुषः ॥ (?)

अपिच । दृष्टोऽयं विधिरद्य तत्पिठरगृहावासे मनो माकृथा

स्त्वं कश्चित् पुरुषोत्तमं वृणु सभामापन्न नाकौकसाम् ।

इत्थं जल्पति वाक्छलेन जलधौ देव्याः श्रियः पातु वो

लज्जानन्दभरान्मुरारिवपुषि भ्रान्ता दृगन्तावलिः ॥

अपिच । जयति जगदेकजननी विबुधगणानन्दकारिणी जयति ।

अमृतांशुमौलिमानसविलासहंसी चिरं जयति ॥

आध मौलिमण्डनफुलमाले । आध तरङ्गितसुरसरिधारे ।

आध अलिक तिलक नव इन्दु । आध सोहाओ सिन्दूरविन्दू ।

कोमलविकटचरणडुडुचारी । अपुरुब नाच करथि तिपुरारि ।

एक देह अधपूरुषदारा । तेतिशकोटि देव देख निहारा ।

सुकवि वंशमणिए सुरस गावे । सेवि देव हर को नहि पावे ॥

नान्द्यन्ते सूत्रधारः। अलमतिविस्तरेण। भोः भोः कुशीलवाः—

तुषारपर्व्वतोपत्यकानिकायकाननैकचमत्कारचन्दनद्रुमस्य मरङ्गमङ्गलापाङ्गखञ्जरीटखेलाकश्मीरमण्डपाङ्गनस्य प्रणतसुरचक्रचूड़ामणिमरीचिमञ्जरीपिञ्जरितचरणनखकेशरस्य भगवतो बालशशाङ्कशेखरस्य शशाङ्कवासरार्चितो निःशङ्कसाहसाङ्केन भूभृता समादिष्टाः स्मो यदेतस्य महामहस्य विलोकनोत्कण्ठया विविधविषयवासिनो विशारदाः शारदानुवृत्तिवृत्तयो वर्त्तुलीकृतास्तदेषामनुरञ्जने भवतावहितेन भवितव्यमिति।

प्रविश्य नटी। को एत्थ उवाओ।

सूत्र। प्रिये! अस्ति किल भरद्वाजकुलजन्मना जनकजनपदीयेन रामचन्द्रशर्म्मणः पुत्रेण वंशमणिकविनोपनिबद्धं गीतदिगम्बरं नाम रूपकमिति .. .. .. .. .. .. ..।

नटी। णाह को एत्थ रामचन्दो।

सूत्र। प्रिये न जानासि यस्यैषा प्रशस्तिपङ्क्ती।

निर्द्दोषा कोषवृन्दे नटति पटुतया नाटके साटकेऽपि
न्याये वैशेषिके वा विलसति सविशेषैव सांख्येति मुख्या।
गद्ये पद्येऽतिहृद्या सहृदयहृदयानन्दिनी यस्य बुद्धि-
र्जातः श्रीविल्वपक्षाभिधकुलजलधौ चन्द्रमा रामचन्द्रः॥ इत्यादि।

End. सहा। एवमस्तु।

Colophon. इति निष्क्रान्ताः सर्व्व॥ सकामकामेश्वरो नाम चतुर्थोऽङ्कः। शुभमस्तु।
शाके १५७७ आषाढ़कृष्णपञ्चमीबुधे।

तुलाधिरूढ़े नृपतिप्रतापे
प्रभाकरे धूतसमस्तपापे।
सुवर्णकान्ते विमले निशान्ते
रत्नाकरे विप्रगणा समस्तुः॥
प्रतापमल्लप्रभुकल्पितायाः
जगत्त्रयेऽच्छिन्नतुला तुलायाः।
यद्वुषनीचेषु पयोमयीव
हिरण्मयी वृत्तिरिवाविरासीत्॥ ?

विषयः । मुदितमहेशो नाम प्रथमोऽङ्कः ।

मानिनीमानभङ्गो नाम द्वितीयोऽङ्कः ।

विरक्तविरूपाक्षो नाम तृतीयोऽङ्कः ।

सकामकामेश्वरो नाम चतुर्थोऽङ्कः ।

---

( ३६०६ । क । ) दानवाक्यसमुच्चयः . By योगीश्वर . 10×1 inches. Folia, 28. Lines, 5 on a page. Extent, 386 çlokas. Character, Nāgara. Date, (?). Appearance, old. Prose and verse. Generally correct.

Beginning. ॐ नमो नारायणाय ।

पुराणागमवाक्यानि परामृश्य बुधैः सह ।

योगीश्वरेण क्रियते दानवाक्यसमुच्चयः ॥

उत्पाद्य दानसामग्री ज्ञातव्या वा सुसम्मता ।

प्रसङ्गाद् ग्रहहोमादिवाक्यमप्यत्र दर्शितम् ॥

तत्र खुरशृङ्गविवर्जितकृष्णचर्म्म १ तथा स्वल्पकृष्णचर्म्म २ गोमयेन लिप्तायां तु भुवि कुशानास्तीर्य्य मृगाजिनद्वयं प्राग्ग्रीवं स्थापनीयम् । इत्यादि ।

End. एवमन्येष्वपि दुष्टग्रहेषु समिद्विशेषेण होमनीय(?)मिति ।

Colophon. इति दानवाक्यं समाप्तमिति । ८४८ । मङ्गल महाश्रीः । इति शुभमिति ।

विषयः । सम्प्रदानकाले विहितानां वाक्यावलीनामेकत्र निबन्धनम् । प्रसङ्गतो दुष्टग्रहादीनां शान्तिविधायकवाक्यानाञ्च समावेशः ॥

---

( ४६८ । ग । ) दुर्घटवृत्तिः . By पवनदेव . Revised by सर्व्वरक्षित . 14×1½ inches. Folia, 97. Lines 5 on a page. Extent, 1,940 çlokas. Character, Maithila. Date, (?). Appearance, old. Prose. Generally correct.

Beginning. ॐ नमः शिवाभ्याम् ।

नत्वा पवनदेवेन सर्व्वज्ञं ज्ञानहेतवे ।

शरद्वहकुलाम्भोजकोषश्रीकाशभाखता ॥

आकमहीपतियत्सरमाने एकनभोनवपञ्चविताने ।
दुर्घटवृत्तिरकारि सुदेवकच्छविलसद्धारलतेव ॥
वाक्याच्छरणदेवस्य छात्रोपग्रहपीड़या ।
श्रीसर्व्वरक्षितेनैषा संक्षिप्य प्रतिसंस्कृता ॥ इत्यादि ।

End. निप्रतिभ्यां स्तम्भेरिति खर्परे शरि-वा-लोपो वक्तव्य इति निरः सकारस्य विसर्ज्जनीयलोपः ।

Colophon. इति दुर्घटे मतुप् पादः ॥

विषयः । व्याकरणशास्त्रम् ।

---

(१००८ । ग ।) देवामृतपञ्चरात्रम् (खण्डितम्). 8×1 inches. Folia, 28. Lines, 6 on a page. Extent, 441 çlokas. Character, Newāri Date, (?). Appearance, old. Verse. Incorrect.

Beginning. ॐ नमो भगवते वासुदेवाय ।
मेरुपृष्ठे सुखासीनं ब्रह्मा लोकपितामहम् ।
सनत्कुमारः श्रीमन्तं पृच्छति परमेश्वरम् ॥ (?)
सनत्कुमार उवाच ।
कोऽयं विष्णुः परो देवः सर्व्वशास्त्रेषु पठ्यते ।
किन्नु मूर्त्तिरमूर्त्तिर्वा अजातो जात एव वा ॥
.. .. .. .. .. .. .. ।
.. .. .. .. .. .. .. ॥
कथं वा स्थाप्यते विष्णुर्लोकनाथो जगद्गुरुः ।
प्रतिष्ठां तस्य देवस्य श्रोतुमिच्छामि तत्वतः ॥ इत्यादि ।

End. पद्मं पश्चिमतो न्यस्य वायव्यां तु हलं न्यसेत् ।
मूषलं चोत्तरे दद्यादैशान्यां शृङ्गि विन्यसेत् ॥

Colophon. इति देवामृते पञ्चरात्रे एकादशमः पटलः ।
(अतः परं खण्डितम् ।)

विषयः । इति देवामृते पञ्चरात्रे द्वितीयः पटलः ।
" " " तृतीयः " ।

इति शैवागमे पञ्चरात्रे चतुर्थः पटलः ।

„ „ „ पञ्चमः „ ।

„ „ „ षष्ठमः „ ।

„ „ „ सप्तमः „ ।

„ „ „ अष्टमः „ ।

„ „ „ नवमः „ ।

„ „ „ दशमः „ ।

„ „ „ एकादशमः „ ।

---

(११८९।) नरपतिजयचर्य्याटीका. (स्वरोदयदीपिकानाम्नी।) By जगन्नाथमिश्र. 15 × 1½ inches. Folia, 202. Lines, 5 on a page. Extent, 4,798 çlokas. Character, Maithila. Date, Saka. 1536. Appearance, fresh. Prose. Generally correct.

Beginning. ॐ नमोऽस्तु हरिहरजगदम्बाचरणेभ्यः ।

हरफणिमणिबिम्बे वीक्ष्य बिम्बं स्वकीयं
झटिति परपुरन्ध्रीसङ्गमं शङ्कमाना ।
किमिति किमिति केयं केयमित्युग्रवाणी
हरतु दुरितजातं मामकं श्रीभवानी ॥

यत्र स्वरोदयपयोनिधिपारयाने ब्रह्मा हरो हरिरपि....खिन्नः ।
कोऽहेन तत्र यदहं शिशुवत्प्लवोऽस्मि नूनं तदत्र चरणौ शरणौ भवान्याः ॥

आसीद् विश्वविशोभिनिर्म्मलयशोराशौ रघोरन्वये
विख्यातो जयचन्द्रमल्लनृपतिर्द्दीनावदाताशयः ।
यो राज्यं मिथिलां विजित्य मगधं गत्वा गयां पौरुषाद्
यो नेपालमकण्टकं व्यरचयज्जित्वा नृपान् पार्व्वतान् ॥
प्राच्यां यो वङ्गदेशं तदनु सुरनदीं दक्षिणे दिग्विभागे
विख्यातः पश्चिमायां प्रविलसदसिना गोरखापालपातः ।
भूमिं सप्ताहगम्यामपि धनददिशो योऽवधीकृत्य भुक्त्वा
देशे दोर्दण्डशौण्डः प्रखरतरलसत्काण्डकोदण्डपाणिः ॥

पुत्रास्त्रयस्तस्य नृपस्य जाता दाक्षिण्यदानादिगुणावदाताः ।
ज्यायानभूत् तेषु वलत्प्रतापः श्रीरायमल्लः स्फुरदुग्रचापः ॥
वाग्वत्याः परसरितस्तु पूर्व्वभागे श्रीभक्ताभिधवरपत्तनाभिरामे ।
येन श्रीनयविनयप्रदानसारस्तुल्यत्वात् पितु – – – षि राज्यभारः ॥

ततः समजनि स्फुरत्तरभुजौघदर्पानलो
दयाविनयदानवान् भुवनमल्लनामा नृपः ।
– – – – – –
परिपालयन् प्रमुदिताः प्रकामं प्रजाः ॥

श्रीप्राणमल्लो नृपतिस्ततोऽभूदखण्डदोर्मण्डलबाणवर्षः ।
श्रीशार्य्यगाम्भीर्य्यदशाङ्कराज्यपयोधिदृष्टो सकलः सुधांशुः ॥
श्रीविश्वमल्लो नृपतिस्ततोऽभूदभूतपूर्व्वप्रवलप्रतापः ।
यः पूर्णचन्द्रो जनतानुरागे त्यागे हरिश्चन्द्र इवापरो यः ॥

तस्मात्त्रैलोक्यमल्लः समजनि रजनीजानिजेता यशोभिः
साहित्यन्यायशास्त्रागमवरकवितारण्यसञ्चारसिंहः ।
दाता भोक्तावदाताग्रयशतिरनघश्चण्डिकापादसेवा-
षण्डीभूताधिजातः शिवचरणसरोजन्मचिन्ताद्विरेफः ॥
तत्पुत्रो दानकर्णो जयति जयजगज्ज्योतिमल्लो नरेन्द्रो
ज्योतिःसाहित्यशास्त्रस्मृतिविविधकलाम्भोधिपारङ्गमश्च ।
नारीणामप्सरीणां सपदि सुखविधुं यस्य दृष्ट्वातिकष्टाद्
वैवर्ण्य – – मूर्च्छाप्रभृतिबहुविधा हन्त भावा भवन्ति ॥

.. .. .. .. .. .. .. ..

याचते पुत्रपौत्रादीन् भाविनो भूमिपालकान् ।
एष निःशेषलोकानामानन्दजनको नृपः ॥
स्वरोदयाख्यं सगुणं पुस्तकं वस्तुरूपकम् ।
धर्म्मार्थकाममोक्षाणां साधनं क्रूरसाधनम् ॥
नेपालेऽस्मिन् दुर्लभं य – – सौ – – दृष्टं नैव चाकर्णितं वा ।
अध्येतव्यं सर्व्वथा चिन्तनीयं पुत्रप्रीत्या पालनीयं भवद्भिः ॥

.. .. .. .. .. .. .. ..

आश्विनशुक्लद्वितीयायां शाके षट्दहनबाणविधुवलिते ।
शतद्वयद्वयडकसमये हैयसुद्राक्षरसमस्ताभिः ॥

प्रारिप्सितग्रन्थविघ्नविघाताय कृतं देवतानमस्कारवपं मङ्गलं शिष्य-शिक्षार्थं ग्रन्थकृदादौ निबध्नाति श्रव्यक्तमिति । इत्यादि ।

End. ग्रहमयं ग्रहाधीनमतोऽशुभं न भवतीत्यर्थः ।

Colophon. इति श्रीशिवचरणारविन्दमकरन्दमेरन्दमदानन्दितविबुधवृन्दसमस्त-प्रक्रियाविराजमानमहाराजाधिराजश्रीश्रीमज्जगज्ज्योतिर्मल्लविरचिता श्रीस्वरोदयदीपिका समाप्ता ।

.. .. .. .. .. .. .. .. ।
.. .. .. .. .. .. .. .. ॥

शुभमस्तु श्रीरस्तु शाके १५३६ लसं ४९४....श्रीजगज्ज्योतिर्मल्ल-निदेशमासाद्य श्रीवंशमणिशर्म्मा व्यलेखीदिदं पुस्तकम् ।

---

(१६४८ । च) नागरकसर्व्वस्वम् . 8×½ inches. Folia, 39. Lines, 5 on a page. Extent, 487 çlokas. Character, Newārī. Date, (?). Appearance, fresh. Verse. Generally correct.

Beginning. ॐ नमो मकरध्वजाय ।

सकृत्तमपि यं स्मरन्नभिमतां मनोहारिणीं
लभेत मदविह्वलां लङ्घकामिनीं कामुकः । (?)
समुल्लसितडम्बरं सुरुचिराङ्गरागारुणं
नमामि सुमनःशरं सततमार्य्यमञ्जुश्रियम् ॥
केचिद् भाषान्तरकृततया कामशास्त्रप्रबन्धा
दुर्विज्ञेया गुरुतरतया केचिदल्पार्थकाश्च ।
तस्मद्भश्रीविरचितमिदं सर्व्वसारं सुबोधं
शास्त्रं शीघ्रं शृणुत सुधियोऽभीष्टसर्व्वार्थकामाः ॥
नानाविचित्रैः सुरतोपचारैः क्रीडासुखं जन्मफलं नराणाम् ।
किं सौरभेयीशतमध्यवर्त्ती वृषोऽपि सम्भोगसुखं न भुंक्ते ॥

छित्वात्मकामं शमयेद् वशी यो
नितम्बिनीनां मदनज्वरार्त्तिम् ।
कृपान्वितो मन्मथशास्त्रवेदी
समाप्नुयात् स्वर्गसुखं सुधीरः ॥ तथाचाह महेश्वरः ।
कामन्त्यक्त्वात्मनः कामां कामव्याधिनिपीड़िताम् ।
चिकित्सयति यो नित्यं पदं प्राप्नोति कामिकम् ॥
स्थानेऽस्य शास्त्रस्य धनाशयानां तिष्ठन्तु तावद्धनधान्यलाभाः ।
सुतार्थिनां नापि सुता दुरापाः श्रद्धावतां साधयतां प्रयत्नात् ॥ इत्यादि ।

End. हितपथिविधविधानं देवतामन्त्रपूजा
दयितयुवतिशिक्षा सत्प्रतिग्राहकाणाम् ।
प्रथममुदितमस्मिन् वीक्ष्य सिद्धैकवीर-
मपरमतिरहस्यं शाङ्करं कामतन्त्रम् ॥
आसीद् ब्रह्मकुले कलाग्रनिलयो यो वासुदेवः कृती
तस्य श्रेष्ठयशाश्चिरं प्रतिमुहुः संप्रेरणात् साम्प्रतम् ।
दीप्तेयं रतिशास्त्रदीपकलिका पद्मश्रियो धीमतो-
ह्यार्थान् प्रकटीकरोतु जगतां संहृत्य हार्द्दं तमः ॥
राजा धर्म्मरतोऽस्तु निर्ज्जितरिपुः षड्वर्गवश्यो वशी
निःक्लेशाः कृतिनो भवन्तु मुदिताः सत्कारलाभान्विताः ।
अन्योन्यप्रियताप्रसन्नमनसः सर्व्वत्र सन्तु प्रजा
नित्यं तिष्ठतु सर्व्वसस्यनिचयैः संपूरिता मेदिनी ॥

Colophon. इति पण्डितपद्मश्रीज्ञानविरचिते नागरकसर्व्वस्वे सुतोदयो नामाष्टमः परिच्छेदः समाप्तः । इति नागरकसर्व्वस्वं परिसमाप्तम् ॥
यथा दृष्टं तथा लिखितं लेखको दोष न क्रियते ।
यदि शुद्धम्वा मशुद्धम्वा स दोषो न जायते ॥ (?)

विषयः । इति पण्डितपद्मज्ञानविरचिते नागरकसर्व्वस्वे त्रिवर्गनिर्णयो नाम प्रथमः परिच्छेदः ।
द्वितीयः परिच्छेदः ।
रत्नपरीक्षा तृतीयः ।

गन्धाधिकारश्चतुर्थः परिच्छेदः ।

सङ्केतकथनं पञ्चमः ।

षष्ठः परिच्छेदः ।

द्वारनिर्देशो नाम सप्तमः परिच्छेदः ।

इति रतिविवेको नामाष्टमः ।

स्वदाररक्षणो नाम नवमः परिच्छेदः ।

बालादिपद्माक्रमलालनो नाम दशमः परिच्छेदः ।

इति मदनोदयो नामैकादशः परिच्छेदः ।

नाडीसंक्षोभणभावनाभक्तोपदेशो नाम द्वादशः परिच्छेदः ।

इति मदनाडीस्वभावाख्यो नाम त्रयोदशः परिच्छेदः ।

विषयविभागो नाम चतुर्दशः परिच्छेदः ।

इत्यालिङ्गानि दश ।

दशनपदान्यष्टौ ।

इत्युत्थानस्थितकरणानि चतुर्विंशतिः ।

इत्यासीनकरणे द्वे ।

इत्यधोमुखकरणे ।

उत्थितकरणानि सप्त ।

वामाचरितप्रकाशो नाम सप्तदशः परिच्छेदः ।

इति अष्टमः ( अष्टादशः ) परिच्छेदः ।

---

(१३२० । क ।) नित्याह्निकतिलकम् . 8×1¼ inches. Folia, 78. Lines, 5 on a page. Extent, 1,072 çlokas. Character, Newārī. Date, (?). Appearance, old. Verse. Incorrect.

**Beginning.** ॐ नमः परशम्भवे ।

शशधरसदृशसरोजे अल्पकदेवात्तपानके चरणौ ।

शितरजभास्वरविमलौ शम्भोर्नित्यं पान्तु जनान् ॥

यस्य प्रसारमण्डलमाव्याप्तसम्भुवनपरान्तगम् । (?)

स श्रीनाथकुलेशः श्रीकुब्जिकाधिदेवो जयति ॥

कुकारः पार्थिवो बीजो अज्ञिकोपरिसंस्थितः ।
का काली शिवगा वक्रा सा श्रीकुब्जिका जयति ॥
स्पृष्टा यया पराविश्व षट्सवर्त्तिष्टीपतजा ।
सा जनेशी कलो काली संस्थिता पश्चिमे पथे ॥
वेदात् परमं शैवं शैवाद्दक्षिणमुत्तमम् ।
दक्षिणात् पश्चिमं श्रेष्ठं अतः परतरं नहि ॥
विज्ञाय श्रीकुब्जिकायाः श्रीकुब्जेश्वरसहितायाः ।
नृणां वर्णाश्रितैश्वर्यं नित्याह्निकमिहोच्यते ॥
ज्ञानार्णवमगाधोऽयं श्रीशम्भुशासनो महान् ।
तत्पारं परं गच्छन् योची श्रीकण्ठसंज्ञकः ॥
तत्वरत्नेर्यथादृष्टं श्रीमत्पश्चिमशासने ।
पारम्पर्य्यक्रमायातं सुगोप्यमनुलिख्यते ॥
स्वगोत्राणां हितार्थाय श्रीमच्छ्रीकण्ठसूनुना ।
सुश्लोकेन कियद् गूढं सोपदेशं जये ननु ॥
आधारादिसुषुम्नान्तं परान्तं परनिर्णयम् ।
कथितं येन सुस्पष्टं तं श्रीकण्ठगुरुं नमे ॥

श्रीभैरव उवाच ।

अथातः संप्रवक्ष्यामि आश्रमाणां स्थितिं प्रिये ।
येनासौ वर्त्तितो योगी भेदकं त्रिविधं लभेत् ॥ इत्यादि ।

End. पश्चिमान्वयसारोऽयं अनुष्ठानतिलकं परम् ।
नित्याह्निकं स्वगोत्राणामोलिखयमुद्धीरितम् ॥ ?
गुरुचरणरेणुना जयेन परमार्थिनाम् ।
संगृहीतं परामृतं श्रीमच्छ्रीकण्ठसूनुना ॥
लिखितपवनशम्भोः सर्व्वमाणह्य दिव्ये
सुखविषयनिधानः सर्वमोक्षैकहेतुः ।
परतरपरमाया सर्व्वकायान्तयोरा
जय जय परयागः सर्व्वयागाधिराजः ॥ (?)

Colophon. इति श्रीमत्पश्चिमाम्नायनित्याह्निकतिलकं समाप्तम्। श्रीमद्विजयकामदेवस्य राज्ये संवत् ३१७ वैशाख पौर्णमास्यां आचार्य्यश्रीहरिहरस्य नित्याह्निकतिलकं निष्पन्नमिति शुभम्। श्रीनाथाय नमः।

विषयः। इति सोत्तरीययज्ञोपवीतलक्षणम्। पञ्चप्रणवोद्धारः। चतुर्विधन्यासः। कूटाक्षरध्यानम्। समयामन्त्रोद्धारः। सन्ध्यावन्दनविधिः। शान्तिबलिः। मन्त्रपीठार्च्चनम्। शक्तिध्यानम्। पिण्डोद्धारः। महाबलिः। इत्यादि।

---

(१०७६। क।) न्यायरत्नाकरः or नयरत्नाकरः. (एकादशाध्यायमात्रम्।)

By श्रीचन्द्र. 10×1 inches. Folia, 52. Lines, 6 on a page. Extent, 1,148 çlokas. Character, Maithila. Date, Lakṣmaṇa Era, 264. Appearance, old. Prose. Generally correct.

Beginning. ॐ नमो नारायणाय।

अथावान्तरकार्य्यतन्त्रतैवाध्याया इति श्रीकरः। तथाहि कार्य्यार्थमनुष्ठानमतः कार्य्यतन्त्रत्वादेव तत्तन्त्रता नान्यथा। तथाकरणस्य प्रयाजादेदशादेशाभेदात् कार्य्यस्याङ्गापूर्व्वस्य तन्त्रत्वं सुज्ञानं। इत्यादि।

End. तथा वाजपेये क्रतुपशवः प्राजापत्याश्च तत्रा + + + + क्रतुपशूनां तथा + + + + सौम्येन व्वयात् पूर्व्वस्य ग्रहाधारस्य पुरोनुवाक्या + + + वेति शेषं भाष्याद्यवनुसन्धेयमिति॥

Colophon. इति महामहोपाध्यायश्रीचन्द्रकृतौ न्यायरत्नाकरे एकादशोऽध्यायः सम्पूर्णः॥ लसं २६४ कल्हो ग्रामे महामहोपाध्यायश्रीरत्नाकरात्मजेन पठता श्रीहरिकरेण लिखितमिदं पुस्तकम्।

यथा यथा निजपय जगत् तथा तथा वृथा।
मुरारिपादपूजनं परं स्थिरं विभावय॥
सहस्रं ब्रह्म यश्चरः पुमान्
गुणोर्म्मिसृष्टिस्थितिकालसंलयः।
प्रधानबुद्ध्यादिजगत्प्रपञ्चसूः
स नोऽस्तु विष्णुर्मतिभूतिमुक्तिदः॥
गरीयोभिर्व्विद्वत्परिषदि सदोद्गीतमहिमा
महोपाध्यायश्रीमान् गुणरतिरभूद् यस्य जनकः।

असौ चन्द्रः श्रीमानकृत नयरत्नाकरमिमं
निबन्धं पोशालीकुलकलमवोदारमिहिरः ॥ शुभम् ।

विषयः । मीमांसाशास्त्रम् ।

---

(३८२ । ध ।) पदसूर्य्यप्रक्रिया. By उत्सवकीर्त्ति. 10×1½ inches. Folia, 40. Lines, 5 on a page. Extent, 606 çlokas. Character, Newāri. Date, (?). Appearance, old. Prose. Incorrect.

**Beginning.** ॐ सिद्धिः । ॐ नमः श्रीमद्गणपतये ।
वाचा चन्द्रसमुद्भूतो मनःक्षीरार्णवाम्बुधात् ।
व्यापकोऽनेकशक्तीनां षोड़शात्मेव धातुवान् ॥ (?)
सत्तादिर्धातुहेतुस्वरविहृखिदृहे चाव्ययो लिङ्गसंज्ञा
व्याकृष्विश्वोद्भवादिः कृदकृतकघनो यो नवात्माष्टमूर्त्तिः ।
संख्याकालोपसर्गाद्यवयवसगुणाः शास्त्रसर्गा च सर्गा
रुद्रोपेन्द्रप्रजेशः प्रकृतिपरयुतो धातवेऽस्मै प्रणोमि ॥
सर्व्वसम्मीगुह्याईनां सतमादाय भास्करम् ।
पदसूर्य्या मयोद्योतो लिख्यते ध्वान्तशान्तये ॥
बालानां तिमिरबुद्धीनां स्वस्थान्ते सन्तामपि च । (?)
क्षमध्वं गुणिनः सर्व्वे सर्व्वशास्त्रार्थवेदिनः ॥ युग्मकम् ।
क्रियाकारकसम्बन्धो विना वाक्येन दुर्घटः ।
विभक्तिद्वययोगेन यत्र बोधमदुर्घटम् ॥
सदेति पदसूऽर्य्योयं स्वान्तध्वान्तस्य नाशकः ।
तमोद्योतेन चित्तेन दृश्यते निर्म्मलं पदम् ॥
इह विभक्तौ – द्वयौ स्यादित्यादि ।
– – – – – – – अम् औ शस् द्वितीया ॥ इत्यादि ।

**End.** जीर्य्यतेरहन् । अतृन् भवति । जरन्त इति स्थितिः । स्त्रीपुंनपुंसके । जरन् । जरती । जरत् ॥ एवं शह – – समाप्तायिति ।

**Colophon.** इति श्री – सरङ्ग-उपाध्यायोत्सवकीर्त्तिकृतौ पदसूर्य्यप्रक्रियायां वर्त्तमान-विभक्तिविरचित नाम प्रथमः ॥ (अतः खण्डिता ।)

विषयः । व्याकरणशास्त्रम् ।

---

(६८४ । ख ।) पाण्डवविजयनाटकम्. By जयरणमल्लदेव. 10×1 inches. Folia, 44. Lines, 5 on a page. Extent, 660 çlokas. Character, Newārī. Date, (?). Appearance, old. Prose and verse. Generally correct.

Beginning. ॐ नमो नाट्येश्वराय ।

इन्द्वैन्यस्ताम्बुवस्योदरजननसुरस्योत्तमाङ्गप्रधानं
शुण्डावद्वालिमालामचलगतितमां राजतां कन्धरेऽस्मिन् ।
यं चात्मीयोत्तमाङ्गं श्रवसि फणिपतेः फं सहस्रं धृतं तद्-
भौमाद्योऽसौ कपाली त्रिजगति विदितः पातु वो नृत्यनाथः ॥ (?)

... ... ... ... ... ... ...

ततः प्रविशति-सूत्रधारः । अये समुदेति भगवान् सूर्य्यः ... ... ...
परिक्रम्य । यदहमादिष्टोऽस्मि निखिलसामन्तचक्रचूडामणि ... ... ...
चरणकमलेन सकलगान्धर्वविद्यागुणरत्नाकरेण ... ... ... ... ...
श्रीमता जयरणमल्लदेवभूपालेन । य एषः ... ... ... ...

नाथमल्लदेवीरमणो भुवनप्रसिद्धः
कीर्त्तिप्रभाधवलिताखिलदिग्विभागः ।
प्रत्यर्थिवीरकुमुदाकरचण्डरोचिः
संराजते विजयमल्लकुमारकोऽयम् ॥

.. .. .. .. .. .. .. .. .. ..

सूत्र । प्रिये श्रूयतां तत् श्रूयतां । श्रीमता श्रीश्रीजयरणमल्लदेवेन राज्ञा स्वयं निर्म्माय गीतवाद्य — — — — — भिनयनवनाट्यरस — — समस्त नाटकलक्षणालङ्काराणि रचनाचमत्काररमणीयं पाण्डवविजयं नाम नाटकं नाटयितव्यम् । इत्यादि ।

End. प्रविश्य दुर्य्योधनः । अहो वृकोदरस्य प्रगल्भता । पश्य रे पश्य —

एषोऽयं रिपुकाननान्तकमहाकल्पान्तदावानलः
क्रुद्धः सङ्गरसिंहविक्रम — — स्त्रैलोक्यरक्षाक्षमः ।
एषा शस्त्रगदावचालनभुजो दुर्य्योधनोऽसौ बली
त्वां हन्तुं समुपागतोऽयमधुना जानासि — — — — ॥

(अतः परं खण्डितम् ।)

विषयः। युधिष्ठिरस्य राजसूययज्ञारम्भात् परतरघटनामवलम्ब्यारब्धोऽयं ग्रन्थः। असमाप्तत्वादङ्कानामनिर्देशाच्च कियन्तमवधिं यावदिति प्रकाशनं दुष्करम्। नूनं सभापर्व्वविवृतं विषयमवलम्ब्य कृतोऽयं ग्रन्थ इतिलस्य "सभापर्व्वनाटक"मिति नामान्तरञ्च दृष्टं प्रमापयतीत्यलम्।

---

(१२६१। क।) प्रतिष्ठातन्त्रम्. 8×1 inches. Folia, 37. Lines, 7 on a page. Extent, 777 çlokas. Character, Newârî. Date, (?). Appearance, very old. Verse. Generally correct.

Beginning. ॐ नमः शिवाय।

ईश्वर उवाच।

+ + + + + + कृत्वा सुनिश्चलं।

लिङ्गं मूले ततः श्वभ्रमस्त्रेणाच्छाद्य सर्व्वतः॥

रक्षां कृत्वा ततस्तस्मिन् ज्योतिर्ध्यानविशारदं।

ततः सुसंस्पृशेद् विद्वान् दें + + + + + + राद्॥ इत्यादि॥

End. निस्वाघाख्ये (?) महातन्त्रे बीजभेदे महाभये।

प्रतिष्ठातन्त्रमाख्यातं समाप्तं शास्त्रमुत्तमम्॥

Colophon. (नास्ति।)

विषयः। इति स्थाप्यमाने लिङ्गगुणे दोषपटलम्।

इति दिक + न्ति पटलम्।

इति पिण्डिकास्थापन(?) पटलम्।

इति देव्यामते प्रतिष्ठातन्त्रे प्रतिष्ठापटलम्।

इति प्रतिष्ठाकाले कर्म्मपटलं परिसमाप्तम्।

इति चण्डयागपटलम्।

इति प्रतिष्ठातन्त्रे गुरुपूजापटलम्।

इति मुखलिङ्गलक्षणपटलम्।

इति देव्यामते प्रतिष्ठापद्धतिः।

इति गङ्ग (?) वास्तुपटलम्।

---

(१६३३ । ৫ ।) प्रपञ्चसारतन्त्रम्. 12×1½ inches. Folia, 124. Lines 6 on a page. Extent, 3,100 çlokas. Character, Bengali. Date, Lakṣmaṇa Era, 408. Appearance, old. Verse. Generally correct.

Beginning. ॐ श्रीमहागणेशाय नमः ।

अकचटतपयाद्यैः सप्तभिर्वर्णवर्गै
र्विरचितमुखबाहापादमध्याख्यहृत्का ।
सकलजगदधीशा शाश्वती विश्वयोनि
र्वितरतु परिशुद्धिं चेतसः शारदा वः ॥
अथाभवन् ब्रह्महरीश्वराभ्यां (ख्याः) पुरा प्रधानात् प्रलयावसाने ।
गुणप्रभिन्ना जगतोऽस्य सृष्टिस्थितिक्षयव्यष्टनिविष्टचेष्टाः ॥
मुनिष्पत्तिश्च कृत्यश्च ते विचिन्त्य समाविदन् ।
वस्कारमजमव्यक्तमरूपं मायिनं विभुम् ॥
मूर्च्छाभासेन दुग्धाब्धौ झषशङ्खसमाकुले ।
मरुत्संघट्टनोत्कीर्णलहरीकणशीतले ॥
उद्यदादित्यकिरणप्रशान्तशिशिरोदये ।
पूर्णचन्द्रकरामर्शप्रतिस्तुब्धजलाकरे ॥
अनन्तभोगे विमले फणायुतविराजिते ।
शयितं शार्ङ्गिणं शौरिमव्यंपद्मभुवस्तदा ॥
तुष्टुवुर्हृष्टमनसो विष्टरश्रवसं विभुम् ।
सूक्तिभिः स्तुतिभिः प्रीतः स्वमूर्त्तिं स व्यदर्शयत् ॥
नीलोत्पलदलप्रख्यां नीलकुञ्चितमूर्द्धजाम् ।
अष्टमीचन्द्र — — — ललाटामायतभ्रुवम् ॥
.. .. .. .. .. .. .. ।
.. .. .. .. .. .. .. ॥
तां दृष्ट्वा तरलात्मनो विधधीशजशङ्कराः ।
अतिष्ठन्निति कर्त्तव्यमूढास्तत्राब्रवीद् वचः ॥
स्वामिन् प्रसीद देवेश के वयं केन भाविताः ।
किं मूलाः किं क्रियाः सर्व्वमस्मभ्यं वक्तुमर्हसि ॥

इति पृष्टः परं ज्योतिरुवाच प्रमिताचरम् ।
पूयमत्तरसम्भूताः सृष्टिस्थित्यन्तहेतवः ॥ इत्यादि ।

End. इत्थं मूलप्रकृत्यचर – – – – – – – जातप्रपञ्च-
चेत्राद्याबद्धभूतेन्द्रियगुणरविचन्द्राग्निसंप्रोतरूपैः ।
मन्त्रैस्तद्वेवताभिर्मुनिभिरपि जपध्यानहोमार्चनाभि-
स्तन्त्रेऽस्मिन् यन्त्रभेदैरपि कमल – – दर्शितोऽयं प्रपञ्चः ॥
यदाश्रयध्वं प्रकृतिप्रभावतो विभिन्नतारां समा + तोजवः । (?)
वसन्ति पुष्यन्ति रवीन्दुवह्नयो नमोऽस्तु तस्मै परिपूर्णतेजसे ॥

Colophon. इति श्रीप्रपञ्चसारे षट्त्रिंशतिः पटलः सम्पूर्णः ।
इति श्रीप्रपञ्चसारः समाप्तः ॥ – – – –
लसं ४०८ कार्त्तिक शुक्ल – – – – – ॥

---

(१०७७ । ड ।) प्रबोधचन्द्रोदयटीका. By रुचि. 12 × 1 inches. Folia, 113. Lines, 5 on a page. Extent, 1,695 çlokas. Character, Bengali. Date, (?). Appearance, old. Prose. Generally correct.

Beginning. तत्रादौ तावत् सर्व्वविद्याविदग्धः सकलशास्त्रविशारदः सकलवेद-वेदान्ततत्त्वज्ञः सकलभाषाचतुरः सकलरसविशेषज्ञः संसारसुखविमुखो मुमुक्षुर्महाकारुणिकः कृष्णमिश्रः स्वविद्वत्तां प्रकाशयन् सकलविद्या-स्वरूपं निरूपयन् दुःखमयसंसारसागरनिमग्नसकललोकमुज्जीहिर्षन् नाटककौतुकव्याजेन शृङ्गारादिरसोपदर्शनेन रससमुत्पादयन् सकल-लोकान् प्रत्यक्षीकृत्य वेदान्तसिद्धान्तं बोधयितुं शान्तरसप्रधानं प्रबोध-चन्द्रोदयाभिधानं नाटकमारभमाणो नान्दीश्लोकमवतारयति मध्याह्ना-र्कत्यादि । इत्यादि ।

End. इयमेव च जीवन्मुक्तिः कथ्यते सोऽयमानन्दः । आनन्दो वाञ्छितप्राप्ति-रितिदशरूपकोक्तः ॥ कृतिमाह सर्व्वथेति लब्धार्थशंसनरूपत्वात् ।
श्रीचन्द्रसिंहस्य नृपस्य वाक्यैः
प्रबोधचन्द्रोदयनाटकस्य ।
ग्रन्थाननेकानुपजीव्य यत्न-
मोट्टीकृतेयं रुचिनात्मबुद्ध्या ॥

नमस्कागाञ्जलिं मौलौ निधायाभ्यर्थये सतः ।
मनागालोचनेनायं सफलः क्रियतां श्रमः ॥
सन्दृश्यते सज्जनवृष्टिपूतं सर्व्वं भवेल्लोकपरिग्रहाय ।
टीका तदेषा मदनुग्रहेण सद्भिर्मनागप्यवलोकनीया ॥

विषयः । प्रबोधचन्द्रोदयनामकस्य नाटकस्य व्याख्यानम् ।

---

(१०७८। ख।) भैरवानन्दनाटकम्. By मणिक. 6×1 inches. Folia, 98. Lines, 4 on a page. Extent, 637 çlokas. Character, Nāgara. Date, (?). Appearance, fresh. Prose and verse. Generally correct.

**Beginning.** ॐ नमो नाटेश्वराय ।

त्रिपुरदनुजं हत्वा नृत्यन्महेश्वरनायके
प्रवरमुनिभिर्देवैर्दैत्यैर्मनोभिरभीप्सिते ।
नयनगुणया (?) नाट्ये याभून्महोत्सवकारिणी
भवतु सततं सेयं सिद्धिर्ममापि च सदती ॥

.. .. .. .. .. ..

.. .. .. .. .. ..

अलमतिपल्लवितेन । यदहमादिष्टोऽस्मि भगवत्पशुपतिचरणकमल-
... ... ... निरन्तरेण ... ... ... रघुवंशचक्रचूडामणिना राजल्ल-
देवीरमणेन श्रीमता श्रीजयस्थितिराजमल्लदेवेन । य एषः
चतुरब्धक्षितिपालमण्डनमणिः सन्मन्त्रचूडामणिः
सर्व्वज्ञानमणिः स्वधर्म्मसरणिः सूर्य्यान्वयग्रामणीः ।
विद्याप्राणमणिर्विशेषविदुषां सम्मानपूजामणिः
श्रीमांश्रीस्थितिराजमल्लनृपतिः सर्व्वार्थिचिन्तामणिः ॥
अग्रतोऽवलोक्य । अये विविधगुणगणालङ्कृतस्यैव नेपालेश्वरस्याति-
मनोहरा परिषदियं । .. .. .. .. .. तत् किमिदानीमतिविलम्बयते
गृहिण्या ।

प्रविश्य नटी । अज्जउत्त इअम्हि ।

सूत्र । प्रिये इदमादिष्टोऽस्मि यदद्यासौ सूनोः कुमारश्रीजयधर्म्ममल्लदेवस्य
.. .. .. विवाहमहोत्सवदर्शनोत्सुकानां .. .. .. समाज्ञः ।

श्रीनाटेश्वरवरलब्धनाट्यवेदविशारदस्य राजवर्द्धनस्य सूनोः श्रीगुरुचरण-मुद्राङ्कितमस्तकस्य मणिकनामधेयस्य कवेः कृतिभैरवानन्दनाटकदर्शना-काङ्क्षा वर्त्तते। तद् त्वया भरतपुत्रकुशीलवैः सह सङ्गीतमनुसृत्य यथावत्प्रयोगेन नाटयितव्यमिति। इत्यादि।

End. स्वस्तिहृतम्।

विषयः। मदनावतीनाम्नीं कामपि सुरसुन्दरीम्दर्षिशापान्मानवीभूतां भूतलागतां सखीद्वितीयां मनोहारिणीमवलोक्य भैरवनामकस्य नायकस्यातितरामुत्कण्ठा। ततस्तया सह मेलनाद् भैरवस्य महानानन्दस्तस्य संक्षेपतो वृत्तान्तः।

---

(२२६। घ।) (१६४८। ज।) भोजदेवसङ्ग्रहः. 10×1 inches. Folia, 30. Lines, 5 on a page. Extent, 600 çlokas. Character, Newāri. Appearance, old. Prose and verse. Generally correct.

Beginning. ॐ नमः सर्व्वज्ञाय।

सर्व्वज्ञमदयमनादिमनन्तमीशं मूर्द्धाभिवन्द्य वचनैर्विविधैर्मुनीनाम्।
श्राव्यप्रबोधमुदयज्ञमुदानिदानं(?) दामोदरो व्यरचयद् गुणिनः समभ्यम्॥
करबदरसदृशमखिलं लिखितमिव तौ निषिक्तमिव हृदये।
सचराचरं त्रिभुवनं यस्य स जीयाद् वराहमिहिरमुनिः॥
स्वस्याभिधेयविपुलाभिधानबहुसङ्ख्यैरजातमुदः।
लघुमलघुवाच्यसङ्ग्रहमवदधतु सुपद्यगद्यमिमम्॥
श्रीभोजदेवनृपसङ्ग्रहसर्व्वसारं
सारस्य सङ्ग्रहगणस्य वराहसाम्यात्।
योगीश्वरादिबुधसाधुमतं गृहीत्वा
ग्रन्थो यथागमकृतो न विकल्पनीयः॥
वक्ष्यामि भूपमधिकृत्य गुणोपपन्नं
विद्यातजन्मसमयं प्रविभक्तभाग्यम्।
अज्ञातसूतिमथवा विदितेऽस्य भाव्यं
सामुद्रयात्रिकनिमित्तशतैः प्रयत्नैः॥ इत्यादि।

End. शाके सम्वत् १२९७ फाल्गुनशुक्लद्वितीयायां रेवतीनक्षत्रे शुक्रदिने शुभलग्ने लिखितमिदं पुस्तकं राज्ये श्रीश्रीजयार्ज्जुनदेवस्य यथादृष्टं तथालिखितं उदकानलमित्यादि रक्षितव्यं ।

प्रागल्भ्यहीनस्य नरस्य विद्याः
शस्त्रा गता कापुरुषस्य हस्ते ।
अन्धस्य किं हस्तगते स्थितोऽपि
निर्वृतयन्ते त्वमिह प्रदीपः ॥ (?)

---

(१३६३ । त ।) मञ्जुश्रीसाधनम् . 10×1 inches. Folia, 6. Lines, 6 on a page. Extent, 126 çlokas. Character, Newārī. Date (?). Appearance, old. Verse. Incorrect.

Beginning. ॐ नमः सर्व्वज्ञाय । विश्वकर्म्मणे नमः ।

जगतां सृष्टिकर्त्तारं स्थितिसंहारकारकम् ।
वरदाभयपीताङ्गीपुस्तकाचचतुर्भुजा ॥ (?)
गृहादिसर्व्ववस्तूनां लक्षणानि प्रवक्ष्यते ।
शुभाशुभविधिर्ज्ञेया लोकानां हितकाम्यया ॥ (?)
यथाशोभा तथार्थत्वा त्वाचैव वर्त्तलक्षणम् ।
शिल्पिकेन तथा कृत्वा गृहादिसर्व्ववस्तु ॥ ? इत्यादि ।

End. ज्येष्ठाङ्गुली भिक्षुवरद्विजानां
मध्याङ्गुली भूपतिविड्जनानाम् ।
कनीयसी शूद्रजनात्पजाय
कार्य्येषु योज्या गुरुसंपदार्थः ॥ (?)

Colophon. इति मञ्जुश्रीसाधने प्रतिमालक्षणं समाप्तम् ।
इति सम्पूर्णं श्रीमत्-नेपालसंवत्सरे ।
नेपालाब्दगते + + + + + + + ।
+ + + + + + एकादश्यां कुजे दिने ॥
लिखित + + + + महाविहारे निवासितभिक्षुश्रीधर्म्मरक्षितेन स्वार्थे – – – –

विषयः । शिल्पशास्त्रम् ।

---

16

(११२४ । ख ।) महादाननिर्णयः. By वाचस्पति. 12 × 1 inches. Folia, 92. Lines, 5 on a page. Extent, 1900 çlokas. Character Maithila. Date, Lakṣmaṇa Era, 392. Appearance, old. Prose and verse. Generally correct.

Beginning. ॐ नमो नारायणाय ।

अभिनवनवनीतप्रीतमाताम्रनेत्रं विकचनलिनलक्ष्मीस्पर्द्धिसानन्दवक्त्रम् ।
हृदयभवनमध्ये योगिभिर्ध्यातनीलं नवगगनतमालश्यामलं कञ्चिदीडे ॥
आसीन्मैथिलमेदिनीशतमखः प्रत्यर्थिसीमन्तिनी-
नित्योद्भूतसुखप्रतापतपनप्रोत्तप्तसप्तार्णवः ।
चञ्चत्कीर्त्तिकुमुद्वतीपरिमलप्राग्भारिभूमण्डलो
राजा श्रोत्रियवंशभूषणमणिः श्रीमान् भवेशः कृती ॥
अस्यान्ववायममलं विमलीकरिष्यन्
कीर्त्त्या दिशो दश मुहुर्धवलीकरिष्यन् ॥
संग्रामसीमनि भटांश्चिदशीकरिष्य-
न्नाविर्बभूव तनयो हरसिंहदेवः ॥
खड्गोल्लीलालेशप्रतिविजितवैरिक्षितिपति-
प्रियाभिर्निःस्पन्दं कृतवरणसेवाविधिरतः ।
कृतक्रीडो नित्यं समिति नरसिंहो नरपति-
र्यशश्चन्द्रोद्योतैरजनि रजनीजानिविजयी ॥
विरोधिवरवर्णिनीनयनवारिकल्लोलिनी-
विलुप्तघनजाङ्गलं जगदनूपमेवाभवत् ।
यदीयसमरोद्यमे विकसति स्फुरद्विक्रमे
ततो गुणमहान्तरादजनि भैरवेन्द्रो नृपः ॥
अयं वाग्विलासानतीतः कवीनां गुणे दोःप्रतापानतीतो भटानाम् ।
त्रिलोकीपतिप्रेयसीवासभूमिः पुनीते जगन्मण्डलं भैरवेन्द्रः ॥
विधाय सरसीः शतं नगरपत्तनादीनदात्
विजित्य रिपुभूपतीनदित यस्तुलापूरुषान् ।
स एष नृपभैरवः समरसीम्नि पञ्चाननो
जयत्यविधिदारको जगति राजवृन्दारकः ॥

श्रीवाचस्पतिधीरं सहकारितया समासाद्य ।
श्रीभैरवेन्द्रनृपतिः स्वयं महादाननिर्णयं तनुते ॥
अथ महादानानि । इत्यादि ।

End. अत्र षोड़षमहादानानामनेकाधिकारिकत्वादेकप्रवृत्त्यनुपपत्तेर्नैकप्रयोगसाध्यत्वमतोऽपुनरावृत्तिर्मिलितमहादानषोड़शसाध्यत्वाभावेनास्य तारकमात्रत्वमिति द्रष्टव्यम् ।
श्रीरूपनारायणभूमिपालकृतो महादानविनिर्णयोऽयम् ।
यशःप्रसूनाञ्चितदिक्कृपतीनामाकल्पमाकल्पतु भूपतीनाम् ॥

Colophon. इति महामहोपाध्यायमिश्रवाचस्पतिविरचितो महादाननिर्णयः समाप्तः ॥ लसं ३९२ वैशाख वदि १२ चन्द्रे दिने समाप्त ।

---

(१३२० । द ।) महालक्ष्मीमतभट्टारकः. 9×1½ inches. Folia, 78. Lines, 6 on a page. Extent, 1,504 çlokas. Character Newārī. Date, Newār Era, 380. Appearance, old. Verse. Incorrect.

Beginning. — — — — विश्वयोनिर्जनुष्टतलयकृत् अश्वदङ्घ्रिप्रभात्मा
यः स्वामी पञ्चपञ्चाश्रमचतुरिपुवत्प्रातिभानां द्विविद्यः ।
दृग्दृश्यं तं सपादं त्रिदशगुरुतनुं — — — — —
सत्सत्वं नौमि शम्भुं जगदवनिसुधाप्राप्तिहेतोः सुगम्यम् ॥ ?
श्रीमद्धिमवतः पृष्ठे शतयोजनविस्तृते ।
योजनानां निशानार्यशिलातलशिखाश्रये ॥
— — — — — चन्द्रसूर्य्यधनञ्जयान्विते ।
चतुष्पदार्थसंक्लृप्ते षडिन्द्रियार्थमन्दिरे ॥
.. .. .. .. .. ..
.. .. .. .. .. ..
.. .. .. .. .. ..

श्रीदेव्युवाच ।
श्रुता मयागमाः शम्भो शास्त्रं नानार्थदं श्रुतम् ।
विद्याविद्यागतं किन्तु — — — — हि तत् ॥

यत्राधुना सुसंक्षिप्तं — — — — — — प्रश्नम् ।
समागमाभिधं ब्रूहि पञ्चसाध्यपदं नृणाम् ॥ इत्यादि ।

End. अष्टादशशतैरेष दिव्यागमप्रचोदितः ।
संहितां शम्भुसंप्रोक्तां महालक्ष्मीमतेऽदरः ॥ (?)

Colophon. इति चतुर्विंशतिसहस्रे श्रीमहामन्त्रसारे श्रीमहालक्ष्मीमतभट्टारके कतिपयसाधनकथनो नाम दशम आनन्दः । समाप्तः श्रीमहालक्ष्मीमन्त्रभट्टारक इति ।
अशीत्यधिकसंयाते संवत्सरशतत्रये ।
मासि चैत्रेऽसिते पक्षे पञ्चम्यां भृगुवासरे ॥
महामतार्णिःपीयूषं श्रीमल्लक्ष्मीमतं हितम् ।
धीमतः संख्यपालस्य पुण्यज्ञानविवृद्धये ॥
कायस्थोदयहर्षेण लिखितं द्रुतम् ।
भ्रान्तिसंक्षिप्तदोषोऽस्मिन् शोधनीयो हि धीधनैः ॥
यच्चाक्षरपरिभ्रष्टमात्राहीनश्च यद्भवेत् ।
सन्तुमर्हसि तत्पापं लिखितं मन्दबुद्धिना ॥
महाराजाधिराजपरमेश्वरपरममाहेश्वरपरमभट्टारकश्रीमज्जयभीमदेवराज्ये ।
इति मङ्गलमहाश्रीः ॥

विषयः । इति पुद्गलाद्यात्मविचारो नाम । १ आनन्दः ।
इति चतुर्विंशतिसहस्रे श्रीमहामतसारे श्रीमहालक्ष्मीमतभट्टारके शरीरविचारो नाम । २ ।
इति इन्द्रियार्थविचारो नाम । ३ ।
इति देवादिपञ्चविचारो नाम । ४ ।
इति अर्चाविचारो नाम । ५ ।
इति पृथगाख्यनिरूपणो नाम । ६ ।
इति षोढाप्रभावकथनो नाम । ७ ।
इति सोपन्यासकथनो नाम । ८ ।
इति न्यासनिरूपणो नाम । ९ ।
इति कतिपयसाधनकथनो नाम । १० ।

(२८५ । ख।) मृत्युजिदमृतीशविधानं or ०अमृतेशतन्त्रम्. 10×1 inches. Folia, 89. Lines, 5 on a page. Extent, 1,335 çlokas. Character, Newārī. Date, Newār Era, 320. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ नमः शिवादिभ्यो गुरुभ्यः ।

यस्त्रिधा त्रिस्ववस्थासु रूपमास्थाय शक्तिमान् ।
उद्भवस्थितिसंहारकृत्स्नं विश्वस्य शक्तितः ॥
विदधाति नमस्तस्मै शुद्धामृतमयात्मने ।
शिवाय अच्छाविच्छिन्नपराय परमात्मने ॥
कैलासशिखरासीनं देवदेवं महेश्वरम् ।
क्रीड़न्तञ्च गणैः सार्द्धं पार्व्वत्या सहितं हरम् ॥
दृष्ट्वा प्रमुदितं देवं प्राणिनां हितकाम्यया ।
उत्सङ्गादवतीर्य्याशु पादौ जग्राह पार्व्वती ॥
पप्रच्छ परया भक्त्या सन्तोष्य परमेश्वरम् ॥

श्रीदेव्युवाच ।

भगवन् देवदेवेश लोकनाथ जगत्पते ।
यत् त्वया महदाश्चर्य्यं कृतं विस्मयकारकम् ॥
सर्व्वस्य जगतो देव किं नु मे परमेश्वर ।
दुर्विज्ञेयं दुराराध्यं रहस्यं न प्रकाशितम् ॥
कार्त्तिकेयस्य न मया (यि) न सुरेषु गणेषु च ।
योगेश्वरीणां मातृणां ऋषीणां योगिनां नहि ॥
तदद्य मे जगन्नाथ सुप्रसन्नो यदि प्रभो ।
प्रार्थयामि प्रपन्नाहं निःशेषं वक्तुमर्हसि ॥ इत्यादि ।

**End.** अमृतेशस्य देवस्य मृत्युजिद्भैरवस्य तु ।
परापरविभेदं च यो विन्दत्यस्य सर्व्वशः ॥
सोऽचिरादमृतं — — — — — न्नात्र संशयः ।
.. .. .. .. .. .. ..
.. .. .. .. .. .. ..
न देयं पापशीलानां क्रोधिनां कामिनां तथा ॥

.. .. .. .. .. .. ..

ददाति यदि मोहेन खेहेन धर्मलिप्सया ।

गच्छति नरकं घोरमित्याज्ञा पारमेश्वरी ॥

– – – – – शस्त्रपालनात् सिद्धिमाप्नुयात् ।

पालनाच्च भवेद्देवि मृत्युजित् परमेश्वरः ॥

Colophon. इति मृत्युजिदमृतीशविधाने मन्त्रमाहात्म्य – – – – – – – पटलः ।
समाप्तमिदं मृत्युजिदमृतीशविधानं सम्पूर्णमिति शुभम् । संवत् ३२० ।

विषयः । सू० तन्त्रावताराधिकारः । १ ।

सू० मन्त्रोद्धारविधिः । २ ।

सू० यजनाधिकारः । ३ ।

सू० दीक्षाधिकारः । ४ ।

सू० अभिषेकसाधनाधिकारः । ५ ।

सू० स्थूलाधिकारः । ६ ।

सू० सूक्ष्म + नाधिकारः । ७ ।

सू० कालवञ्चनः । ८ ।

सू० सदाशिवाधिकारः । ९ ।

सू० दक्षिणचक्राधिकारः । १० ।

सू० उत्तरतन्त्राधिकारः । ११ ।

सू० कुलाम्नायाधिकारः । १२ ।

सू० सर्व्वविद्याधिकारः । १३ ।

सू० सर्व्वाधिकारः । १४ ।

सू० १५ ।

सू० व्याप्त्यधिकारः । १६ ।

सू० पद्माधिकारः । १७ ।

सू० वश्याकर्षणाधिकारः । १८ ।

सू० १९ ।

सू० राजरक्षाधिकारः । २० ।

सू० इष्टुपाताद्यधिकारः । २१ ।

इ० जीवाकर्ष+अधिकारः । २२ ।

इ० मन्त्रविचारवर्णनः । २३ ।

इ० मन्त्रमाहात्म्य — — २४ ।

---

(१०७६ । ग ।) रघुवंशटीका. (शोभनाभिधा) By श्रीगर्भ. 10 × 11 inches. Folia, 94. Lines, 5 on a page. Extent, 1,410 çlokas. Character, Nāgara. Date, (?). Appearance, old. Prose. Correct.

Beginning. ॐ नमः शिवाय ।

वागर्थावित्यादि । वाक् च अर्थश्च वागर्थौ । अजाद्यदन्तमिति अर्थ-शब्दस्यैव पूर्व्वनिपाते प्राप्ते धर्म्मादिषूभयमिति वचनादुभयं भवति ॥ इत्यादि ।

End. वाच्यलिङ्गं मतं तुर्य्यं मन्दयोरपि सुन्दरमिति + + + । ८२ ।

Colophon. इति वैद्यकश्रीगर्भकृतायां शोभनाभिधानायां प्रथमः सर्गः ॥

इति रघुवंशटीकायां शोभनाभिधानायां षष्ठः सर्गः समाप्तः ।

---

(१६३३ । क ।) रत्नकरण्डिका. By द्रोण. 10 × 1½ inches. Folia, 200. Lines, 5 on a page. Extent, 2,500 çlokas. Character. Nāgara. Date, Saṃvat, 1189. Appearance, very old. Verse. Correct.

Beginning. + + + + +

प्रणम्य शिरसा विष्णुं शारदा + + + + + ।

लिखति वाजसनेय + + + + + क्रियाविधानं वक्ष्यामः ॥ इत्यादि ।

End. ऋक्षसंयोगात् पादयो — — कारणं ।

एकादश्युपवासेषु — — — — ॥

— — — — द्रोणेनाकारि यत्नतः ॥

Colophon. इति द्रोणविरचितो रत्नकरण्डिकानामस्मृतिसमुच्चयः समाप्तः ॥

ॐ स्वस्ति—संवत्—११८९ वैशाख शुदि — — — —

विषयः । धर्म्मशास्त्रम् । (जीर्णत्वात् कीटदष्टपत्रावलीत्वाच्च नास्य सम्यक् विवरणं प्रदातुमलम् ।)

---

(१०७६ । ख ।) रूपसाधनम् . By सुभूतिचन्द्र . 10×1½ inches. Folia, 96. Lines, 6 on a page. Extent, 2,160 çlokas. Character, Newārī. Date, (?). Appearance, old. Prose. Incorrect.

**Beginning.** ॐ नमो वागीश्वराय ।

नत्वा श्रियं विधुविरिञ्चिकरीन्द्रवक्त्रां
वागीश्वरीं गुरुपदं जनकं कविञ्च ।
चेतः शिशोर्जडरुजान्तकजातु दिव्यं
श्रीरूपसाधनवरं विमलं प्रवक्ष्ये ॥

मैनाक इत्यादि । पातु रक्षतु कोऽसौ मुनिः सर्व्वाकारेण सर्व्वपदार्थानां यथावद्बोधनात्मनां मुनिः । अथवा अकथ्यकथने मौनयोगान्मुनिर्भगवान् सम्यक्सम्बुद्धः ॥ कथम्भूतः । शाक्यः शाकेषु भवः शाक्यः । अथवा शाक्यस्यापत्यं पौत्रादिकं शाक्यः । इत्यादि ।

**End.** उक्तार्थेत्यादि । डन् लोपः । अकारेण सन्धिः । मनस् शब्दरूपसाधनं । ६२ ॥ इकारसकारान्तान्यप्रसिद्धानि ॥

**Colophon.** इति सुभूतिचन्द्रमहाकवेर्व्विरचिते सुप्प्रकरणे नपुंसककाण्डानि द्वितीयानि परिच्छेदानि समाप्तानि ॥ (?)

**विषयः ।** सुवन्तरत्नाकरनामकस्य व्याकरणशास्त्रस्य व्याख्यानम् ।

---

(१३७६ । क ।) शिवधर्म्मः (शान्त्यध्यायमात्रम्) . 10×1 inches. Folia, 20. Lines, 5 on a page. Extent, 250 çlokas. Character, Newārī. Date, Newār Era, 522. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ नमः शिवाय ।

नन्दिकेश्वर उवाच ।

अतः परमिदं गुह्यं रुद्रोद्गीतमहोदयम् ।
महाविघ्नप्रशमनं महाशान्तिकरं शुभम् ॥
अकालमृत्युशमनं सर्व्वव्याधिनिवारणम् ।
परचक्रप्रमथनं सदाविजयवर्द्धनम् ॥
सर्व्वदेव – – – समभीष्टफलप्रदम् ।
सर्व्वशान्त्यधिका – – – शाश्वतम् ॥ इत्यादि ।

End. शान्त्यध्यायमिदं पुण्यं न देयं यस्य कस्यचित् ।
शिवभक्ताय दातव्यं शिवेन कथितं पुरा ॥

Colophon. इति शिवधर्म्मशास्त्रे नन्दिकेश्वरप्रोक्तशान्त्यध्यायः समाप्तः । संवत् ५२२ भाद्रपदशुक्लद्वितीयायां ।

विषयः । दुष्टग्रहादीनां शान्तिविधायकविविधदेवतास्तवसङ्ग्रहः ।

---

(१३२० । ग ।) श्रीदत्तपद्धतिः. 10×1 inches. Folia, 132. Lines, 5 on a page. Extent, 2,640 çlokas. Character, Maithila. Date, Lakṣmaṇa Era, 299. Appearance, old. Prose and verse. Correct.

Beginning. ॐ तस्मै नमस्ते शशिमधगाय ।
सम्यक् तातनगेश्वरात् बहुगुणात् वैशेषिकान्विचिकी-
वेदव्याकरणान्यधीत्य निखिलं काव्यादिकं ज्योतिषम् ।
दातुः संसदि सम्मतो नरपतेः श्रीदेवसिंहस्य स
श्रीदत्तो वितनोति पद्धतिमिमामेकाग्निदानोचिताम् ॥
तत्र परम्परागतपरप्रदत्तक्रयजयकुसीदकृषिसेवावाणिज्यादिन्यायार्ज्जित-धनस्य निषिद्धेतरे काले देशे च वंशविद्यावृत्तिविशुद्धसत्पात्रे श्रद्धया प्रतिपादनमिहामुत्र च श्रेयसे भवति । इत्यादि ।

End. तुलापुरुषमहादाने यजमानतुलैवैका संख्या सुवर्णस्य हिरण्यगर्भेऽपि चाष्ट-चत्वारिंशदङ्गुलविस्तारद्वासप्तत्यङ्गुलोच्छ्रायघटनिर्वाहिका परं सुवर्ण-स्यैका संख्येति + + + + मत्र न लिखितं । + + स्वरणपद्धतो सुप्रपञ्चितमेवास्माभि + + + + + ।
पुराणपौराणिकवाग्वेदनिबन्धबद्धस्मृतिशास्त्रदृष्ट्या ।
प्रकाशितं + + + + + मिहामदो बुधा बुद्धिपथं नयध्वम् ॥

Colophon. इति महामहोपाध्यायमिश्रश्रीनगेश्वरात्मजावसथिक + + + + + ध्यायश्रीश्रीदत्तपद्धतावेकाग्निविधिमहादानविधानं पूर्णं । समाप्तोऽयं ग्रन्थः । शुभमस्तु । लसं २९९ पौष शुदि ९ चन्द्रे महोपाध्यायश्रीनर — — — — महानुभावानामनुज्ञामवाप्य खगरायां वासस्थमाद्य श्रीधनेश्वरेण लिखितेयं पुस्तीति ।

विषयः । धर्म्मशास्त्रम् ।



---

(११९४ । क ।) सिद्धसारसंहिता. By रविगुप्त. 8×1½ inches. Folia, 97. Lines, 5 on a page. Extent, 1,212 çlokas. Character, Newārī. Date, (?). Appearance, very old. Prose and verse. Generally correct.

**Beginning.** ॐ नमः सर्व्वज्ञाय ।

सर्व्वं प्रणम्य सर्व्वज्ञं दुर्गगुप्तस्य सूनुना ।
संहिता सिद्धसारेयं रविगुप्तेन वच्यते ।
आयुर्व्वेदोदधि + + मशक्ता येऽल्पमेधसः ।
तेषामियं प्रताराय विहिता तन्मया दृढ़ा ॥
ब्रह्मा प्रोवाच यं स्वर्गे वेदमायुर्निबन्धनम् ।
शिष्येभ्यः कथयामास काशिराजाय तं क्रमात् ॥
तस्यानुगानिशालाक्यं कायभूतचिकित्सितं ।
शल्यौ गदवयोवाले रत्ता + + विवर्द्धनं । (?)
पुरुषा व्याध्यधिष्ठानं महाभूतगुणात्मकं ।
शारीरमानसाः सन्तु सहजा व्याधयो मताः ॥
शारीरा + कुष्ठाद्याः क्रोधाद्या मानसाः स्मृताः ॥ इत्यादि ।

**End.** बुद्धिमेधा स्मृतिकरं सन्नस्याग्नेश्च दीपनं । (?) इति स्तुतिः ।
( अतः परं खण्डिता । )

विषयः । चिकित्साशास्त्रम् ।

---

(१३६१ । ठ ।) सिद्धान्तसारपद्धतिः. By भोजदेव. 10×1½ inches. Folia, 71. Lines, 6 on a page. Extent, 1,384 çlokas. Character, Newārī. Date, Newār Era, 187. Appearance, old. Prose and verse. Generally correct.

**Beginning.** ॐ नमः शिवाय ।

यमासाद्य निवर्त्तन्ते विकल्पाः सुखदुःखयोः ।
– – – – – – – ॥
– – – – – विधिं तथा ।
पवित्रारोहणान्तेय प्रतिष्ठास्य – – – ॥ इत्यादि ।

**End** सैषा क्रमेण नित्यादिकर्म्मकरणपद्धतिः ।
भवाब्धिमुत्तितीर्षूणां – – नौरिव निर्म्मिता ॥

यद् विप्रकीर्ण – – – – – – स्फुटार्थं
नित्यादिकर्म्म – – – – – – – ।
तत् संगतञ्च लघुचाप्यपरिस्फुटञ्च
श्रीभोजदेवजगतीपतिनाभ्यधायि ॥

Colophon. इति महाराजाधिराजश्रीभोजदेवविरचितायां सिद्धान्तसारपद्धतौ जीर्णोद्धारविधिः समाप्तः। संवत् १८७ कार्त्तिकशुक्लद्वितीयातृतीयायां भोमदिने लिखितमिति। शुभमस्तु।

विषयः। इति सूर्य्यपूजाविधिः।

इति महाराजाधिराजश्रीभोजदेवविरचितायां सिद्धान्तपद्धतौ नित्यकर्म्मविधिः समाप्तः।

इति मुद्रालक्षणं समाप्तम्।

इति प्रायश्चित्तविधिः।

इति दीक्षाविधिः।

इति साधकाभिषेकः।

इति आचार्य्याभिषेकविधिः।

इति पादप्रतिष्ठाविधिः।

इति लिङ्गप्रतिष्ठाविधिः।

इति द्वारप्रतिष्ठाविधिः।

इति हृत्प्रतिष्ठाविधिः।

इति ध्वजप्रतिष्ठाविधिः।

इति जीर्णोद्धारविधिः।

---

(७७२। घ।) सुगतिसोपानम्. By गणेश्वर. 10×1½ inches. Folia, 90. Lines, 5 on a page. Extent, 1,800 çlokas. Character, Maithila. Date, Lakṣmaṇa Era, 224. Appearance, old. Prose and verse. Generally correct.

Beginning. ॐ नमो नारायणाय।

वेदस्मृतिपुराणादि दृष्ट्वा लोकहितैषिणा।
कृतं सुगतिसोपानं श्रीगणेश्वरमन्त्रिणा॥

गङ्गास्मरणं नरकागम + + + ति कीर्त्तनं सर्व्वपापविमुक्तिपूर्व्वक-
रुद्रलोकगमनफलं जन्मत्रयार्ज्जितपापक्षयफलं वा ॥ इत्यादि ।

End. वैश्वदेववल्यनन्तरस्य सप्त प्रस + + + + + + + + + + + ज्ञातिभिः सह स्वयं भुञ्जीत ॥

Colophon. इति सप्तक्रियामहाब्धिविग्रहिकठकुरदेवादित्यमहामत्त + + + + + + + मदारावाधिराजश्रीगणेश्वरकृतं सुगतिसोपान-पुस्तकमिदं समाप्तं । शुभमस्तु लिखितमिदं + + + + + + नेपालराज्यावस्थितश्रीललितपत्तने ठक्कुरश्रीमतिशर्म्मणा लिखितं।
लसं २२४ आश्विन वदि + + + + + ।

यत्कर्म्म कुर्व्वतो नाम जुगुप्सा नैति पुत्रक ।
तत्कर्त्तव्यमशङ्केन यन्न गोप्यं महाजनैः ॥

विषयः । धर्म्मशास्त्रम् ।

---

(११६५ । क ।) सूर्य्यसिद्धान्तभाष्यम् . By चण्डेश्वर . 10×1½ inches. Folia, 224 (leaves 1 to 10 missing). Lines, 5 on a page. Extent, 3,920 çlokas. Character, Maithila. Date, Lakṣmaṇa Era, 392. Appearance, fresh. Prose and verse. Generally correct.

Beginning. (१म पत्रात् १० म पत्राणि न सन्ति अतो विंशपत्रे प्रारब्धस्य द्वितीया-ध्यायस्य प्रारम्भवाक्यं लिखितम् ।)

अदृश्यरूपाः कालस्य मूर्त्तयो भगणाश्रिताः ।
शीघ्रमन्दोच्चपाताख्या ग्रहाणां गतिहेतवः ॥

रवीन्द्वोः सर्वं मन्दोच्चाख्यौ न्यूनाधिकारिणौ । भौमादीनामपि मन्दो-च्चाख्याः प्राप्ततयः न्यूनाधिकारिण्यः । इत्यादि ।

End. एतत्ते सर्व्वमाख्यातं रहस्यं परमाद्भुतम् ।
ब्रह्मे तत्परमं पुण्यं सर्व्वपापप्रणाशनम् ॥
दिव्यं चतुर्ग्रहर्क्षाणां चरितं ज्ञानमुत्तमम् ।
विज्ञायार्कादिलोके – – – माप्नोति शाश्वतम् ॥
इत्युक्त्वा मयमामन्त्र्य सम्यक् तेनाभिपूजितः ।
दिवमाचक्रमेऽर्कांश प्रविशन्स्वमण्डलम् ॥ ?

मयोऽय दिव्यं तज्ज्ञानं ज्ञात्वा साक्षाद्विवस्वतः ।

कृतकृत्यमिवात्मानं मेने निर्धूतकल्मषः ।

ज्ञात्वा तमृषयस्तस्य सूर्य्याल्लब्धवरं मयम् ।

परिवव्रुरुपेत्य – – – पप्रच्छुरादरात् ॥

स तेभ्यः प्रददौ प्रीतो ग्रहाणां चरितं महत् ।

अत्यद्भुततमं लोके रहस्यं ब्रह्मसम्मतम् ॥

इति चाष्टार्धः श्लोकः ।

Colophon. इति मैथिलवाजपेययोमयाजिश्रीचण्डेश्वराचार्य्यविरचिते सूर्य्यसिद्धान्तभाष्ये पञ्चदशोऽध्यायः । सम्वं ३९२ फाल्गुन सुदि ७ चन्द्रे रत्नपुरनगरे श्रीका + शर्म्मणा लिखितेयं पुस्तीति । ॐ नमो भवाय । ॐ गणेशाय ।

विषयः । इति मैथिलवाजपेययोमयाजिश्रीचण्डेश्वराचार्य्यविरचिते सूर्य्यसिद्धान्तभाष्ये मध्यगतिः । प्रथमोध्यायः ।

इ० स्फुटगतिः । २ ।

इ० उपकरणाध्यायः । ३ ।

इ० चन्द्रग्रहणाध्यायः । ४ ।

इ० सूर्य्यग्रहणाध्यायः । ५ ।

इ० छेद्यकाध्यायः । ६ ।

इ० ग्रहद्वन्द्वाध्यायः । ७ ।

इ० ताराविक्षेपाध्यायः । ८ ।

इ० ग्रहनक्षत्राणामुदयास्तमयाध्यायः । ९ ।

इ० पौर्णमास्याशृङ्गोन्नतिः (?) १० ।

इ० व्यतीपातवैधृताध्यायः । ११ ।

इ० गोलाध्यायः । १२ ।

---

(१६०८ । क ।) हरिचरितकाव्यम् . By चतुर्भुज . 14×1 inches. Folia, 87. Lines, 5 on a page. Extent, 1,250 çlokas. Character, Maithila. Date, (?). Saka 144+. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

सुरसमूहसमीहितसिद्धये धरणिधारणगोद्विजवृद्धये ।
यदुकुलेऽवततार य एष नः सततमस्तु मुदे मधुसूदनः ॥
सुचिरमेदुरमिन्दु — — — — लोभनलोचनम् ।
मुररिपुं तड़िदुज्ज्वलवाससं भजत रासरसोत्सवलालसम् ॥
नवरसोल्लसितेऽम्ब सरस्वति त्वमिह मामव काव्यसरस्वति ।
— — — — — — — — — — ॥
विदितधरणिहृदयः स दयालुं योगशयन — — — सुचिरशयालुम् ।
हरिमवबोध्य कृतस्तवराजः कनकगिरिं सहते न — — — ॥
इत्यादि ।

**End.** इत्थं निजविक्रमेण च मिथोभेदेन च क्वापि यो
भूमेर्भारभरं जहार परमानन्दस्वरूपो हरिः ।
तन्मूर्त्तिं परिभावयन्नविरतं लीलाश्च तस्य — — —
मुक्तिं क्षिप्रमवाप्नुयां स भगवान् संसारसिन्धौ तरिः ॥

**Colophon.** इति हरिचरिताख्ये नव्यसत्काव्यमुख्ये
प्रसरदमृतधारे वर्णितेशावतारे ।
कृतकलुषनिरासे सुष्ठुबालाविलासे
ऽधिकदशविसर्गः प्राप्त एषोऽत्र सर्गः ॥
ग्रामोत्तमोऽस्त्यमलमञ्जुगुणैकपुञ्जः
श्रीमान् करञ्ज इति वन्द्यतमो वरेन्द्रग्राम् ।
यत्र श्रुतिस्मृतिपुराणपदप्रवीणाः
सच्छास्त्रकाव्यनिपुणाः स्म वसन्ति विप्राः ॥
कीर्णः प्रजापतिगुणैः परिपूर्णकामः
श्रीस्वर्णरेख इति विप्रवरोऽवतीर्णः ।
तं ग्राममग्रगणनीयगुणं समग्रं
जग्राह शासनवरं नृपधर्मपालात् ॥

तदन्वयक्षीरसमुद्रचन्द्रो बभूव भुन्दूरिति भूसुरेन्द्रः ।
आर्यं यं आचार्य्यवरोऽभिषिक्तः – – सुराणां गुरुणापि – – ॥
तयोपरः काश्यपगोत्रभास्करस्तत्पुत्र आचार्य्यवरो दिवाकरः ।
– – – – – – – – – ॥
नित्यानन्दः कवीन्द्रोऽभवदतिविभवः कंसविध्वंसिनोऽंश-
स्तद्वंशस्यावतंसो स्वश्रमकृशयशो भारते यो बभार ।
– – – – – – – –
– – – – – – – – ॥
नानामुनीनां वचनानि सम्यग्-
विचार्य्य तत्त्वार्थमथाधिगम्य ।
सदा सदाचारपरायणो य-
श्चक्रे प्रमोदात् स्मृतिकौमुदीञ्च ॥
काश्यामुपास्य भगवद्भवपादपद्म-
मत्यादरेण सुचिरेण गृहानुपेत्य ।
जज्ञे सुतं स निजवंशवतंसमीश-
मीशस्य विश्वविदितं शिवदाससंज्ञम् ॥
– – – – – –
– – – – – – ।
प्राप्तो महा – – – –
स्वदारतुष्टोऽजनयत् तनूजान् ॥
सश्रीकनारायणमिश्र आद्यो
मन्त्री महान् माधवपाठकोऽथ ।
मोदप्रभायोऽनु च भानुशर्म्मा
श्रीमान् कनीयांस्तु चतुर्भुजोऽभूत् ॥
यस्य – – – जिह्वायां स्वर्णेन मधुना समम् ।
विलिख्य त्रैपुरं मन्त्रं पित्रेदं पद्यमैप्सत ॥
व्याकारेऽप्रतिमः स्मृतावनुपमः साहित्यविद्योत्तमः
षट्तर्कागमसत्तमः कविसभासम्भावना – – – ।

श्रीकृष्णार्पितचेत – सुरवचोवैचित्र्यपद्मानन:
श्रीमानेष चतुर्भुजो विजयतां – – – पद्मानन: ॥
भागीरथीपरिसरे परमा – – –
श्रीरामकेलिनगरे बहुशिष्टजुष्टे ।
सौवर्णवर्णवसताविव जन्मभू – –
श्रीमानसौ पिलकूले वसति स धीमान् ।
व्याकारसारमधिगम्य स सभ्यगादौ
व्युत्पात् – – – सुविशुद्धबुद्धि: ।
शास्त्रं परं पितु – – – विचिन्त्य काव्यं
धीरोऽकरश्समुदारतरं प्रबन्धम् ॥
शरविधुमनुभि: शकस्य वर्षे परिगणितेऽथ नभस्यशुक्लपक्षे ।
प्रतिपदि शशिवासरे सुपूर्णे हरिचरिताह्वयनव्यकाव्यमेतत् ॥
यावद् वेदो विलसतितरामृग्यजु:साममेदो
रम्यं रामायण – – – प्रमाणं पुराणम् ।
– – – – – – – – –
– – – कविकुलमुदे कल्प्यतां काव्यमेतत् ॥
भट्टाचार्यचतुर्भुजेन रचिते ग्रन्थेऽत्र पौरन्दरे
श्रीगोविन्दपदारविन्दयुगलौ (?) सौरभ्यविभ्राजिते ।
– – – युगाम्बुराशिशशभृत्संख्य – – – –
श्रीमान् भानुकरोऽकरोल्लिपिमिमामानन्दसन्दोहदाम् ॥

विषय: । क्षीरोदधिशयानस्य भगवतो नारायणस्य ब्रह्मादिदेवानामभ्यर्थनया पृथिव्या भारमपनेतुं देवकीगर्भे जन्मग्रहणाङ्गीकरणं तत: श्रीकृष्णरूपेणाव-तीर्णेन तेन या या लीला: कृतास्तासामेकैकशो वर्णनम् ।

---

# DESCRIPTION OF THREE MANUSCRIPTS IN GUPTA CHARACTER IN THE DARBAR LIBRARY.

(२७७।) निश्वासतत्वसंहिता. Folia, 114. Lines, 6 on a page. Extent, 4,500 çlokas. Date (?). Appearance, old. Verse. Correct. Complete.

Beginning.

ॐ नमः शिवाय ।

रिचीक उवाच ।

गतोऽहं पूर्व्वमाशायां पुण्यानि समिधन्तया ।
अपूर्व्वं दृष्टमाश्चर्य्यं तद् दृष्ट्वा कौतुकान्वितः ॥
अष्टाशीतिसहस्राणि ऋषीणामूर्द्ध्वरेतसाम् ।
+ + + + + + + + ॥
+ + + + कथय मम पृच्छतः ।
त्वं वेत्ता सर्व्वशास्त्राणां वेदानाञ्च विशेषतः ।
तेन पृच्छामि भगवन् येन वेत्सि मतङ्ग त्वम् ॥

मतङ्ग उवाच ।

शृणु वत्स समासेन प्रवक्ष्यामि तवाखिलम् ।
नैमिषे वसमानैस्तु श्रुतं + + + ॥
तत्रैव दीक्षितो ब्रह्मा केशवश्च रिचीककः ।
कौतूहलान्विताः सर्व्वे विस्मयं परमं गताः ॥
परस्परं वदन्त्येव सर्व्वशास्त्रविशारदाः ।
कथं दीक्षा प्रपद्येत मुक्त्वा वेदोक्तमागमम् ।
न हि वेदात् परस्थानाद् योगी + + ॥
सांख्ययोगस्य वेत्तासौ कथं विष्णुश्च दीक्षितः ।
+ + + + + + + + ॥

निश्वासमुखमूलसूत्रदेव्युवाच ।

आचक्ष्व देवदेवेश दीक्षा निर्व्वाणगामिनी ।
शिवतत्त्वं परञ्चैव यं विदित्वामृती भवेत् ॥ इत्यादि ।

Colophons. ६ पत्रे,—इति निश्वासमुखतत्त्वसंहितायां लौकिकधर्म्मे प्रथमः पटलः । श्लोकशतं सप्ताशीत्यधिकम् ।

९ „ इति निश्वासमुखतत्त्वसंहितायां लौकिके द्वितीयः पटलः। श्लो १२२ ।

१५ „ इति निश्वासमुखतत्त्वसंहितायां लौकिके तृतीयः पटलः। श्लोक १९७ ।

१८ „ इति निश्वासमुखतत्त्वसंहितायां चतुर्थः पटलः । श्लोकशतं सप्तविंशोत्तरं । चतुःस्रोताः लो ६४३ ।

१९ „ इति निश्वासतत्त्वसंहितायां मूलसूत्रे प्रथमः पटलः। श्लो २३ ।

१९ „ इति ० द्वितीयः पटलः । १३ ।

२० „ इति मूलसूत्रे तृतीयः पटलः । श्लोक १७ ।

२० „ इति मूलसूत्रे चतुर्थः पटलः । श्लोक १८ ।

२१ „ इति मूलसूत्रे पञ्चमः पटलः । श्लोक २५ ।

२२ „ इति मूलसूत्रे षष्ठः पटलः । श्लो (२) ५ ।

२२ „ इति मूलसूत्रे सप्तमः पटलः । श्लो २० ।

२३ „ इति मूलसूत्रे अष्टमः पटलः । श्लो २० ।

२४ „ इति निश्वासतत्त्वसंहितायामुत्तरसूत्रे प्रथमः पटलः। श्लो ४१ ।

२५ „ उत्तरसूत्रे द्वितीयः पटलः । श्लोक ४१ ।

२६ „ उत्तरसूत्रे तृतीयः पटलः । श्लो २४ ।

२७ „ उत्तरसूत्रे चतुर्थः पटलः ।

२९ „ उत्तरसूत्रे पञ्चमः पटलः । श्लो ५२ ।

सूत्रोत्तरश्लोक २०८ समाप्तश्च ।

३२ पत्रे,—इति निश्वासतत्त्वसंहितायां नयसूत्रे पाशप्रकरणं प्रथमः पटलः। श्लो १३०।

३५ ,, नयसूत्रे प्रकृतिविचारे द्वितीयः पटलः। १०२।

३७ ,, इति निश्वासतत्त्वसंहितायां नयसूत्रे रूपविचारस्तृतीय पटलः। श्लो ७७।

४१ ,, इति निश्वासतत्त्वसंहितायां नयसूत्रे परमामृतसद्भाव-विचारः चतुर्थः पटलः। श्लो ४६६।

श्रौतसूत्रत्रय समाप्तः।

४५ ,, इति निश्वासतत्त्वसंहितायां गुह्यसूत्रे प्रथमः पटलः। श्लोक।

४८ ,, इति गुह्यसूत्रे द्वितीयः पटलः। श्लो १३०।

५१ ,, इति गुह्यसूत्रे सर्व्वसिद्धिसन्दोहस्तृतीयः पटलः। श्लो ११२।

५४ ,, इति गुह्यसूत्रे चतुर्थष्पटलः। लो १३३।

५७ ,, इति गुह्यसूत्रे पञ्चमः पटलः। श्लो ११२।

६१ ,, इति गुह्यसूत्रे षष्ठुष्पटलः। श्लो १४०।

६९ ,, इति गुह्यसूत्रे सप्तमः पटलः। श्लोक २९२।

७२ ,, इति गुह्यसूत्रे प्रक्रियायोगपटलः। १४९।

८० ,, इति निश्वासतत्त्वसंहितायां गुह्यसूत्रे नवमः पटलः। श्लोकशतद्वयनवत्यधिक।

८२ ,, इति निश्वासतत्त्वसंहितायां गुह्यसूत्रे दशमः पटलः। श्लोकशतमेकादशोत्तरम्।

८७ ,, इति निश्वासतत्त्वसंहितायां गुह्यसूत्रे एकादशमः पटलः।

८९ ,, इति निश्वासतत्त्वसंहितायां गुह्यसूत्रे मातृकाप्रस्तावो द्वादशमः पटलः। श्लोका एकून षष्टि।

९३ ,, इति निश्वासतत्त्वसंहितायां गुह्यसूत्रे ब्रह्मोद्धारः त्रयो-दशमः पटलः। श्लो १८९।

९६ ,, सद्योजातस्य कल्पः समाप्तः।

१०० पत्रे,—अघोरस्य कल्पः समाप्तः ।

१०१ ,, इत्येव तत्पुरुषस्य कल्पः ।

१०२ ,, तत्पुरुषस्य द्वितीयकल्पः ।

१०३ ,, इति निश्वासतत्त्वसंहितायां गुह्यसूत्रे पञ्चानां परित्राणं पटलः । श्लोकानि सतानि त्रीणि पञ्चोनषष्ठ्यधिकानि ।

१०८ ,, कवचोद्धारः पटलः ।

११० ,, इति निश्वासतत्त्वसंहितायां गुह्यसूत्रे पञ्चदशमः पटलः । श्लोका द्वादश ।

११२ ,, इति निश्वासतत्त्वसंहितायां गुह्यसूत्रे रैतविद्याविधानपटलः षोड़शमः । श्लोक द्वाषष्टिः सार्द्धः ।

११३ ,, इति निश्वासतत्त्वसंहितायां गुह्यसूत्रे वीजाग्नियस्यकः + + पटलः । श्लोका ८१ ।

११४ ,, इति निश्वासतत्त्वसंहितायां गुह्यसूत्रेऽष्टाद + + त्रिंशत + + + + सहस्रचतुष्टयं श्लोकं शतानि पञ्च च ॥

---

(१६४७।) लङ्कावतारः. Folia, 24. Lines, 6 on a page. Extent, 522 çlokas. Date, Newār Era, 28.

Beginning. उमापतिं नमस्कृत्वा + + + + ।
वक्ष्यामि भो स्थिराश्रीयां तन्मे शृण्वन्तु साधवः ॥
× × × × × × ×
ब्रह्मघ्नानां कृतघ्नानां रोघ्नानां (?) पापकर्म्मिणाम् ।
जायन्ते सर्व्वथा साध्या अन्येषान्तु तथेतरा ॥
निदानमेतद्वुद्दिष्टन्तव राजा विभीषण ॥ इत्यादि ।

End. सम्वत् २८ (आषराग्यङ्कानि ।) कार्त्तिककृष्णदिवाष्टम्याम् ।

विषयः । चिकित्साशास्त्रं आरोग्यार्थशान्तिस्वस्त्ययनादिसहितम् ।

---

(२२८।) स्कान्दपुराणम्. Folia, 247, Lines, 5 to 7 on a page. Incomplete. Leaves are not in order.

Beginning. प्रथमपत्रस्थः कश्चित् श्लोकः।

तीर्थसंप्लवनार्थाय पौर्णमास्यां कृताह्निकाः।
पौराणिकाः संपश्यन्तः सूतं सत्यपरायणम्॥

पुष्पिकाः ;— स्कान्दपुराणे नन्दिकेश्वरमहाभाष्यं आदितप्रभृतिराद्यायाश्च चतुर्विंशत्।
श्लोकास्तत्वेन ८१५ (?)
„ अन्धकनन्दियुद्धे अध्यायः (३८) स्कान्दपुराणोक्तप्रशानिक।
„ अन्धक तपः प्रयाणे अध्यायः।
६२ पत्रे,— „ नरकवर्णने तपो नाम।
„ नरकवर्णने वैतरणीं नाम।
६८ „ „ रौरवं नाम नरकवर्णनेऽध्यायः।
६९ „ „ नरकवर्णने महारौरवं नाम।
„ नरकवर्णने तपोतिग्रं।
७२ „ „ नरकवर्णने कुम्भीपाकं नाम असिपत्रं नाम।
७८ „ „ नारकीयमोक्षणे। ४३।
„ देव्यावरप्रदानं नाम। ४५।
„ संसारातिवर्णनं नाम। (४५)
„ वाराणसी + + कारणः। ४७।
८४ „ „ देव्यावरप्रदाने। ४ (८) (?)
८५ „ „ सोमनन्दिदेव्योर्वरप्रदाने। ४ (९) (?)
आदितः प्रभृति एकत्वेन श्लोकसहस्रत्रयम्।
स्कान्दपुराणे कौशिकाभिषेकः। ११०।
„ कौशिकशापः। ११५।
„ शुम्भनिशुम्भसैन्यवर्णनम्।
१०१ „ „ देवासुरसङ्ग्रामे शुम्भनिशुम्भाभिजाय (?) (१२०)
१०७ „ „ शुम्भनिशुम्भसङ्ग्रामे देवीयुद्धजयः।

१११ पत्रे,—स्कन्दपुराणे महिषासुरवधः ।

११२ ।

११३ ।

११५ ।

११६ ।

" ध्यानविधौ (प्रथ)मोऽध्याय । १२२ ।

१२० ।

१२१ " " ध्यानविधौ द्वितीयः अध्यायः । १२३ ।

" ध्यानविधौ चतुर्थः अध्यायः । १२५ ।

" ध्यानविधौ षष्ठः । १२७ ।

" ध्यानविधौ सप्तमः अध्यायः । १२९ ।

" अन्धकवरप्रदानो नामाध्यायः । १३० ।

" हिरण्याक्षनिर्याणे अध्यायः । १३३ ।

" प्यूहरवरोऽध्यायः । (?) १३४ ।

" देवासुरसङ्ग्रामाध्यायः । १३५ ।

" युद्धलाभः । १३७ ।

१३५ " " असुरत्रासनोऽध्यायः ।

१३६ " " युद्धे अध्यायः ।

" युद्धे अध्यायः । १४० ।

" अध्याय १४१ युद्ध ।

" युद्धे अध्यायः । १४२ ।

१४२ " " वरुणालयसमरे अध्यायः । १४३ ।

" युद्धे अध्यायः । १४४ ।

" युद्धे अध्यायः । १४५ ।

१४४ " " युद्धे अध्यायः । १४६ ।

" युद्धे अध्यायः । १४७ ।

१४८ " " युद्धे अध्यायः । १४८ ।

" युद्धे अध्यायः ।

१४९(?) पत्रे,—स्कान्दपुराणे यमलोकाभिगमने अध्यायः । १५० ।
१५० „ „ राज्यवर्णनो नाम अध्यायः । १५१ ।
१५१ „ „ ब्राह्मण + + अध्यायः । १५२ ।
„ गय (?) गमने अध्यायः । १५४ ।
१५५ „ „ सागरप्रवेशे अध्यायः । १५५ ।
१५७ „ „ किङ्करादेशे अध्यायः । १५५ ।
१५८ „ „ किङ्करयुद्धे अध्यायः । १५६ ।
१५९ „ „ असुरसन्देशने अध्यायः । १५६ ।
„ वराहयुद्धे अध्यायः । १५८ ।
„ विप्रचित्तिपातने । १५९ ।
„ वराहाध्यायने अध्यायः । १६० ।
„ + + + सेपणे अध्यायः । १६१ ।
१६५ „ „ हिरण्यवधे । १६२ ।
„ तुकस्थले अध्यायः । (?) १६३ ।
१६७ ।
१६८ „ „ वराहरूपसंहारे अध्यायः । १६४ ।
१६९ „ „ वराहोत्सवे अध्यायः । १६ + ।
१७१ ।
१७२ ।
१७३ ।
१७४ ।
१७५ „ „ मन्दरारोहणे । १६६ ।
१८१ „ „ अमृतमथने नीलकण्ठोपाख्याने महादेवस्तोत्राध्यायः । १६७ ।
१८२ „ „ अमृतमथने युद्धे । १६८ ।
१८३ ।
१८४ ।
१८५ ।

१८७ पत्रे,—स्कन्दपुराणे चामरे अध्यायः । १६९ ।

१८८ ।

१८९ ।

„ यातुधानाख्याने अध्यायः । १७२ ।

„ + + अध्यायः । १७३ ।

„ जमदग्निवरप्रदानो अध्यायः । १७४ ।

१९४ ।

१९५ ।

१९६ „ „ हरिश्चन्द्रपुरवर्णनाध्यायः । १७५ ।

१९७ ।

१९८ „ „ नाम (?) माहात्म्ये अध्यायः । १७६ ।

२०२ „ „ गङ्गावतरे अध्यायः । १७७ ।

२०४ „ „ गङ्गावतरणे अध्यायः । १७८ ।

„ अध्यायः । १७९ ।

„ रणोद्योगः । १८० ।

„ अन्धकयुद्धे मन्दरवर्णनं अध्यायः । १८१ ।

२११ „ „ अन्धकमथने व्यूहरचनाध्यायः । १८२ ।

२११ „ „ गणयुद्धे अध्यायः । १८३ ।

२१२ „ „ गणयुद्धे । १८४ ।

„ गणयुद्धे । १८४ ।

२१४ „ „ गणयुद्धे । १८५ ।

२१५ „ „ गणयुद्धे । १८६ ।

२१६ „ „ जाम्बवद्वधे । १८७ ।

२१७ „ „ गणयुद्धे । १८८ ।

२१७ „ „ गणयुद्धे । १८९ ।

२१८ „ „ गणयुद्धे अध्यायः । १९० ।

२१९ „ „ गणयुद्धे अध्यायः । १९१ ।

२२० „ „ गण + + अध्यायः । १९२ ।

स्कन्दपुराणे गणयुद्धे अध्यायः । १९३ ।
२२० पत्रे,— „ गणयुद्धे अध्यायः । १९४ ।
२२७ „ स्क (न्दपुराणे ग) णयुद्धे अध्यायः । १९७ ।
स्कन्दपुराणे गणयुद्धे अन्धकने + + । १९८ ।
२२७ „ „ गणयुद्धेऽसुरभावे अध्यायः । १९९ ।
„ युद्धभूमिवर्णने । २०२ ।
„ अन्धकविजये । २०३ ।
२३४ „ „ गणयुद्धेऽन्धकमपने अन्धकमयनं समाप्तञ्च ब्रह्मण्याः स्तवः । २०४ ।
२३५ „ „ अन्धकवधः ।
„ भूमिजापुत्रवर्णने अध्यायः । २०७ ।
„ तपविघ्ने ब्राह्मणामन्त्रण । २०८ ।
२४१ „ „ तरुपुत्रग्रहणे विप्रामन्त्रणं समाप्त अध्यायः । २०९ ।
२४२ ।
२४४ „ „ अशोकतरुपुत्रग्रहणे समाप्तं अशोकतरुपुत्रग्रहणञ्च अध्यायः । २१० ।
२४+ ।
२४८ „ „ स्कन्दाभिषेकानुज्ञाते । २११ ।
२५१ „ „ सेतोपद्माभिषेके (?) अध्यायः । २१२ ।
२५२ ।
२५३ „ „ + + + पे अध्यायः । २१३ ।
१५४ ।
२५७ „ „ शैतवरप्रदाने अध्यायः । २१४ ।
„ + + वर्णने अध्यायः । २१५ ।
२६४ „ „ त्रिपुरवधे अध्यायः । २१६ ।
„ त्रिपुरवधे सुरवर्णनं अध्यायः । २१७ ।
„ त्रिपुरवधे समाप्तं त्रिपुरवधेति अध्यायः । २१८ ।
„ प्रह्लादचरित्रे अध्यायः । २२० ।

स्कान्दपुराणे योगविधौ पञ्चमः अध्यायः । २२६ ।

„ योगविधौ अष्टमः ।

१८४(?)पत्रे,— „ योगविधौ नवमः ।

„ कान्यकुब्जामाहात्म्यं नाम । (२४०) ।

„ सगरोत्पत्तिः अध्यायः । २६८ ।

३०३ „ „ सखोदरसंवादे । २६९ ।

„ वाराणस्यावलोकने कैशोपव्यधनदपञ्चचूडानां वरप्रदानं नामाध्यायः । ३१८ ।

३२१ „ „ सतो प्रवेश अध्यायः ।

३३० „ „ सुकेशवरप्रदाने ।

३३८ „ „ उपमन्युवरप्रदानः ।

„ दत्तयज्ञप्रवचने । (३२९) ।

आदितः प्रभृति सर्व्वतल्लेन (८(?)५४) ।

स्कान्दपुराणे दक्षशापानुकीर्त्तनं नाम । ३(?)४३ ।

„ ईश्वरार्चनविधिः ।

## DESCRIPTION OF SOME RARE PAPER MANUSCRIPTS IN THE DARBAR LIBRARY.

(१४१८।) अमृतोदयनाटकम् . By गोकुलनाथ. 10×5 inches. Folia, 30. Lines, 10 on a page. Extent, 900 çlokas. Character, Nāgara. Date, Saṃvat, 1848. Appearance, new. Prose and verse. Generally correct.

**Beginning.** ॐ नमो भगवते वासुदेवाय ।

ब्रह्माण्डबिन्दुगणवर्षणवारिवाह
वक्ष्ये मुखेषि निषिद्धषि जीवनस्य ।
स्पष्टं त्वया स्तु(?)परदृष्टिविलोपकष्टं
निर्म्मोष्टुमर्हति तवैव विवेकविद्युत् ॥

अपिच । असकृदुपरमद्भिरङ्गभेदैर्नटगणनिःक्रमणाद् विविक्तरङ्गः ।
अविदितसुखसन्धिरासुखान्तो निगमकवेस्तव रूपकप्रबन्धः ॥

किञ्च । न दहति सगरान्वयं न पाशात्
प्रभवति नाप्यलिकादुदेति चक्षुः ।
न च किमपि शृणोति नैश्वर्गा
मम कथमस्तु तव स्तवेऽधिकारः ॥

नान्द्यन्ते सूत्रधारः ।

निर्वर्त्तित एष प्रत्याहरणावतरणादिभिरङ्गैरुपसंहितः पूर्व्वरङ्गः । साम्प्रतमवसरो गुरोर्गोकुलनाथस्य गिरां प्रबन्धमभिनेतुमुपनतश्चासौ प्रशान्तपरिजनोपप्लवः शिशिरमासः । इहहि – – – – – –

परिक्रम्य । अयमहं भोः चित्रकूनगरवासी मूलमस्मि सर्व्वस्यारम्भस्य रागो नाम कामरूपो नटः । तस्य ममामृतोदयं नाम नाटकमभिनिनीषतः पूर्व्वपरिगृहीताभोगभूमिकापरिहारेण विविक्तवेशपरिग्रहमुरीकुर्व्वन्तु भावमिश्राः । इत्यादि ।

End. अपवर्गः । मातरहं पूर्णोऽस्मि । तथापीदमस्तु ।

संसारात् पा + निर्व्विद्य सर्व्वं निर्व्वाणलिप्सया ।

श्रवणान्मननाद्ध्यानात् पश्यन्तु पुरुषोत्तमम् ॥

Colophon. इति निष्क्रान्ताः सर्व्वेऽपवर्गप्रतिष्ठा नाम पञ्चमोऽङ्कः समाप्तश्चायं ग्रन्थः । सम्वत् १८४८ ।

विषयः । श्रवणसम्पत्तिर्नाम प्रथमोऽङ्कः ।

मननसिद्धिर्नाम द्वितीयोऽङ्कः ।

निदिध्यासनधर्म्मसम्पन्नाम तृतीयोऽङ्कः ।

यमात्मदर्शनं नाम तुरीयोऽङ्कः ।

अपवर्गप्रतिष्ठा नाम पञ्चमोऽङ्कः ।

---

(१३०६ । ) अरिष्टनवनीतव्याख्या . ( श्रीधरा . ) By नवनीतनर्त्तनकवि. 12×2 inches. Folia, 54. Lines, 7 on a page. Extent, 1,114 çlokas. Character, Newārī. Date, Newār Era, 800. Appearance, fresh. Prose and verse. Incorrect.

Beginning. ॐ नमो विघ्नहर्त्रे ।

अरिष्टनवनीतं यद् होराशास्त्रात् समुद्धृतम् ।

व्याख्या विरच्यते तस्य श्रीधराख्या मनोहरा ॥

प्रथमं प्रबन्धारम्भे अभिमतदेवतानां नमस्कृत्य प्रबन्धसंज्ञां कर्तृसंज्ञाञ्च प्रकाशयति ।

श्रीरङ्गेशं मत्वा होराशास्त्राम्बुधीन् समालोच्य ।

नवनीतनर्त्तनकविररिष्टनवनीतमाजह्रे ॥

अरिष्टनवनीतं अरिष्टसारं अरिष्टमतिमरणसूचकमशुभं । तथोक्तं वैजयन्त्यां रिष्टारिष्टे शुभाशुभे इति । इत्यादि ।

End. एवमुक्तेन प्रकारेण बलानि विचार्य्य रिष्टग्रहस्य बलमधिकं चेद् रिष्टमस्तीति जानीयात् । रिष्टापवादग्रहस्य बलमधिकं रिष्टिर्नास्तीति । — — — — रिष्टमस्त्येव ॥

Colophon. इत्यरिष्टनवनीतव्याख्याने रिष्टापवादो नाम षष्ठः परिच्छेदः । शुभमस्तु । संवत् ८०० फाल्गुन शुक्लः षष्ठी । बुधवारे ॥

विषयः । इति० साधारणपरिच्छेदः । १ ।
इति० मात्ररिष्टपरिच्छेदः । २ ।
इति० पित्ररिष्टपरिच्छेदः । ३ ।
इति० सर्व्वारिष्टपरिच्छेदः । ४ ।
इति० सुतारिष्टपरिच्छेदः । ५ ।
इति० अरिष्टापवादः । ६ ।

---

(२६२७।) अश्वमेधनाटकम्. By सुमतिजितामित्र. 16×4½ inches. Folia, 37. Lines, 9 on a page. Extent, 2,015 çlokas. Character, Newāri. Date, Newār Era, 810. Appearance, fresh. Prose and verse. Generally correct.

Beginning. श्रीश्रीनृत्यनाथो जयति । श्री गुरवे नमः ।
नान्दीगीतम् । मालवरागे । ज । अ । य । माङ्काले ।
त्रिभुवननायकं, ताण्डवनृत्यरसं
विधुवरतिलकसूवेशम् ।
विदितनटवरं, सुपिङ्गजटं
ललितहारभुजगेशम् ॥
दितिसुतनाशककलितरङ्गगतं
त्रिनयनसुपद्मसुखम् ।
अङ्गहेमनिभमङ्गकुसुदकुन्दसितं
अभिनयनिपुणमहेशम् ॥
पश्यति सुरगणो भवनृत्यं
चलितं नूपुररवललितम् ।
भक्तवरदायकगजचर्म्मवसनं
सुललितशङ्करचपम् ॥
वहति जटातटे गाङ्गजलविमलं
सहृदयहृदयहारि ।
सुमतिजितामित्रकृतहरवर्णनं
परिसुखयतु भक्तजनम् ॥

नान्दीश्लोकः ।

आनन्दं चन्द्रचूडश्छिदशशतनुतः कान्तयालिङ्गिताङ्गो-
गौरीशो दिव्यमूर्त्तिर्दनुजकुलरिपुः कुन्दकर्पूरगौरः ।
स्वच्छन्दं रङ्गसंस्थो नटभवनभवं विघ्नजालं विधुन्वन्
नृत्येशः पातु नित्यं जगदखिलमिदं देवदेवो महेशः ॥

सूत्र । आर्य्ये गुणवति कमलवदने त्वरया इतस्तावदागम्यताम् ।

नटी । अज्जउत्त वन्दामि । इअम्हि को णिओओ अनुचिट्ठिअदुत्ति ॥

सूत्र । आर्य्ये सकलनृपतिचक्रचूडामणिना श्रीश्रीसुमतिजयजितामित्रमल्लदेवेन श्रीश्रीश्रीश्चेष्टदेवताप्रीतिकामनया जैमिनिभारतोक्ताश्वमेधिकाभिनयमभिनेतुमादिष्टोऽस्मि । .. .. .. .. .. ।
अयि कमलविलोचने नानादेशादागतभूमिपालकविवरविदग्धजनसामाजिकानाम् चेतोरञ्जनाय श्रः श्रीसुमतिजयजितामित्रमल्लदेवाज्ञया संस्कृतेन जैमिनिभारतोक्ताश्वमेधिकाभिनयमभिनेतुं युधिष्ठिरद्रौपदीरूपस्य ग्रहीतुमावां गच्छावः ॥ इत्यादि ।

End. सर्व्वे । तथास्तु । ... ।

Colophon. इति जैमिनिभारतं सम्पूर्णम् ॥
सुमतिश्रीजितामित्रो मल्लदेवो महीपतिः ।
युधिष्ठिरस्य यज्ञस्य नृत्यारम्भं करोति हि ॥
श्रीसूर्य्यवंशशतपत्रसहस्ररश्मि-
र्नेपालभव्यनृपतिकैरवकाननेन्दुः ।
भक्तापुरे जयति भूपशिरस्थरत्न-
भाभिर्विचित्रपदपङ्कजरञ्जितश्रीः ॥
जितामित्रमल्लं गोपालं गोपालः ।
जितामित्रमल्लः सपुत्रं पुनातु ॥
सम्वत् ८१० पौष सुदि — ॥

———

(११६९।) अश्ववैद्यकम्. By दीपङ्कर. 8 × 2½ inches. Folia, 85. Lines, 6 on a page. Extent, 1,419, çlokas. Character, Newārī. Date, (?). Appearance, fresh. Verse. Incorrect.

Beginning. ॐ नमः सर्व्वज्ञाय ।

शिवं प्रणम्य सर्व्वज्ञं तज्ज्ञाः किमपि यं विदुः ।
अश्विभ्यां शालिहोत्रस्य वाजिशास्त्रस्य कारयेत् ॥
श्रीनिधानकरो नाम भिषगासीत् परार्थकृत् ।
कान्तारवासिनीवैद्यवंशदुग्धाब्धिचन्द्रमाः ॥
तस्माद्गार्गायामजन्यन्तसन्तानकारणम् ।
अभूज्ज्ञानाकरः श्रीमान् बुद्धः शुद्धोदनादिव ॥
श्रीमद्दीपङ्करस्तस्य सूनुर्गुणगतोऽभवत् ।
दीपङ्करपदाम्भोजरजोरञ्जितमूर्द्धजः ॥
तेन सज्जनदासेन गाढमालिङ्ग्य दुर्जनम् ।
संक्षेपतस्तुरङ्गाणां लक्षणं सचिकित्सितम् ॥
अध्यायानां नवत्येव श्लोकाः शतत्रयोदशाः ।
पूर्व्वशास्त्राणि संहृत्य प्रयोगादुपलभ्य च ॥
यदेतल्लिखितं किञ्चिदात्मनः स्मरणाय तत् ।
सन्तः स्वीकर्त्तुमर्हन्ति परकीर्त्ति — — — — ॥
हस्त्यश्वरथपादातं नृपतेः कीर्त्तितं बलम् ।
तत्र मुख्यतया राजन् वाजिनः शत्रुमर्द्दनाः ॥ इत्यादि ।

End. तैले च तिलतैलं स्यात् क्वाथे च बदरं तथा ॥
निर्घण्टकाध्यायः ।

Colophon. इदं चाश्ववैद्यकशास्त्रं दीपङ्करकृतं समाप्तम् ॥

विषयः । अश्वचिकित्साशास्त्रम् ।

---

(७६५।) अश्वायुर्वेदः. By गण. 12 × 4 inches. Folia, 41. Lines, 11 on a page. Extent, 1,353, çlokas. Character, Nāgara. Date, (?). Appearance, fresh. Prose and verse. Generally correct.

**Beginning.** ॐ नमो भगवते वासुदेवाय ।

प्रणिपत्य धवलतनूमघतिमिरहरं गोपतिहरशशाङ्कम् ।
श्रायुर्वेदनिधिं महामतिं शालिहोत्रञ्च ॥
ये शालिहोत्र – – – गर्गैस्तु महर्षिभिः पुरा गदिताः
तुरङ्गशास्त्रयोगाः शान्त्यै विकाराणाम् ।
तेषां मध्या + + जनसारतरं हयहितार्थमुद्धृत्य
रचितः स्वयं समासेन संग्रहः सिद्धयोगानाम् ॥
धर्म्मार्थकामसिद्धिर्यथा तुरङ्गैर्भवेत् तथा पूर्व्वं
कथितं महामतिभिः तथापि वक्ष्ये समुद्देशम् ।
श्रश्वैर्हस्तगता पृथ्वी शौरश्वैर्विपुलं यशः ।
विजयश्च भवत्यश्वैरश्वा धर्म्मैरविभूषणाः ॥ इत्यादि ।

**End.** वृषो निम्बं हरत्यौ च गुडूची कटुका वचा ।
गोमूत्रेण समायुक्तं श्लेष्मघ्नं पित्तमुत्तमम् ॥
काष्ठपिण्ड । (श्रतः परं खण्डितम् ।)

विषयः । श्रश्वायुर्वेदे गणकृते सिद्धयोगसंग्रहे श्रश्वप्रशंसाध्यायः ।
श्रश्वायुर्वेदे गणकृते सिद्धयोगसंग्रहे श्रावर्त्ताध्यायः ।
इति सर्व्वाङ्गलक्षणाध्यायः ।
इति मिश्रको नामाध्यायः ।
श्रश्वायुर्वेदे गणकृते सिद्धयोगसंग्रहे महादोषाध्यायः ।
तालुगलक्षणम् । कुलाध्यायः । वयोज्ञानम् । वर्णाध्यायः । क्षेत्रविभाग-प्रदेशः । पुण्ड्राध्यायः । व्याधिनिर्द्देशः क्रियासूत्रम् । गुग्गुलुविधिः । लवणविधिः । श्यामाकविधिः । माष-यव-चणक-गोधूम-मुद्ग-शण-विधिः । रसविधिनिर्णयः । रसवीर्य्यविधिः । द्रव्यगुणदोषनिर्णयः । खादनविधिः । दशमूलविधिः । महातिक्तकविधिः । शिरीषाद्यघृत-विधानम् । पञ्चतिक्तकघृतविधानम् । तैलविधिः । बृहत्-कटुपिण्डिका-विधिः । इत्यादि ।

---

(१५००।) आचारदीपकम्. By गङ्गाविष्णु. 12×4 inches. Folia, 59. Lines, 10 on a page. Extent, 1,622 çlokas. Character, Nāgara. Date, Saka Era, 1674. Appearance, fresh. Prose and verse. Generally correct.

**Beginning.** श्रीगणेशाय नमः। निर्विघ्नमस्तु।

पार्व्वतीनन्दनं वन्दे गजवक्त्रं चतुर्भुजम्।
स्मर्त्तृणां विघ्नहन्तारं देवं मूषिकवाहनम्॥
आचारदीपकं नाम सर्व्वाचारं जगद्धितम्।
स्वल्पपाठोऽल्पबुद्धिश्च निबध्नामि नृपाज्ञया॥
विद्वद्भिरवलोक्येदं शोधनीयं प्रयत्नतः।
द्विजातीनां सुकृत्यं हि मुनिसद्मतान्वितम्॥

तत्र दक्षोक्तम्।

प्रातरुत्थाय कर्त्तव्यं यद् द्विजेन दिने दिने।
तत्सर्व्वं संप्रवक्ष्यामि द्विजानामुपकारकम्॥ इत्यादि।

**End.** आपत्कालेषु विप्रस्य शौचाचारं न चिन्तयेत्।
स्ववशमुद्धरेत् (?) पश्चात् स्वस्थो धर्म्मं समाचरेत्॥

देवलः। शास्त्राचम्य (?) शुचित्वं तु न प्रत्यक्षादिसाधनम्।
शास्त्रं तत् कृतशौचानामाशङ्का नैव विद्यते॥
इति श्री वि० गङ्गाविष्णु० आ० द्रव्यशुद्धिः। ३।
आसीद्धर्म्मैकराशिः प्रभुरहह मुकुन्दाभिधानो वदान्यो-
ऽप्यर्थिस्व + नयज्ञः समरविजयकृत् कीर्त्तिसम्पूरिताशः।
श्रीमान् भूपालचूड़ामणिविमलपदोऽतिप्रतापानलेन
दग्धारात्युच्चिभृतोर्व्वीपतिरमरवरांशावतारो नृपेन्द्रः॥
तस्यात्मजोऽभून्नृपतिप्रधानो-
भङ्गीतिनामा सुकृती वदान्यः।
त्रिशृङ्गदेशादिमहीधरोऽस्य
शम्भीरनामाभवदात्मजाद्यः॥

राजा मुख्यस्तत्सुतोऽभूत् तुलाख्य-
स्तत् पुत्रो जातः प्रतापाभिधश्च ।
शौर्य्यौदार्य्यौज्ञान्वितो प्राप्य पुत्रो
यः स्वर्वासं प्राप्तवान् यौवराज्ये ॥
तत्-पुत्रो दामोदरसंज्ञोऽभूत् भूपालोऽभूद् दयालुः ।
भूभृत्-कृत्यज्ञोऽस्य सुतोऽभूत् कीर्त्त्या युक्तो दिग्विजयाख्यः ॥
कामराजदत्तनामकोऽभवत् तदात्मजो
राज्यसौख्यनिष्पृहश्चमादिसंयुतः ।
तस्य योऽभवत् सुतस्त्रिविक्रमाभिधो नृपः
शत्रुवर्गनाशकृत् स्ववर्गपालकः सुधीः ॥
दन्तिचित्योर्दानदो नीतिकर्त्ता
विद्यावन्तो यत्र गर्ज्जन्ति सार्याः ।
कृत्याकृत्यालोचनार्थं निबन्धं
कर्त्तुं सो मामाश्रितं त्वादिदेश ॥
विद्वान् गौतमवंशजो द्विजवरः श्रीरामभद्राभिध-
स्तत्पुत्रो जयदेवनामधरश्रीदेवोऽभवत् पुण्यवान् ।
तत्पुत्रोऽल्पमतिर्निबन्धमकरोदाचारदीपाभिधं
गङ्गाविष्णुरनेक + + मवलोक्याज्ञाधरो भूपतेः ॥
यद्यपि ग्रन्थनिर्म्माणयोग्यमध्ययनं न मे ।
तथापि क्षम्यतां प्राज्ञैः साहसोऽयं नृपाग्रहात् ॥

Colophon. इति श्रीत्रिविक्रमनृपाज्ञया गङ्गाविष्णुद्विजविरचित-आचारदीपकग्रन्थः समाप्तः ॥

श्रीशाके १६७४ ज्येष्ठ शुदि ५ पञ्चमीलिखितमिदं पुस्तकं शिवशर्म्म-भुवनेशाभ्याम् ।

विषयः । इति० आत्मचिन्तनविधिः ।
,, मूत्रपुरीषोत्सर्गविधिः ।
,, शौचविधिः ।
,, दन्तधावनविधिः ।

इति० यज्ञोपवीतविधानम् ।

,, दर्भविधिः ।

,, प्रणवविधिः ।

,, प्राणायामविधिः ।

,, स्नानविधिः ।

,, वस्त्रतिलकविधौ ।

,, सन्ध्याविधिः ।

,, अभिवादनविधिः ।

,, मङ्गलावीक्षणविधिः ।

,, सामान्यदेवपूजा ।

,, अध्ययनविधिः ।

,, योगक्षेमविधिः ।

,, मध्याह्नस्नानतर्पणविधिः ।

,, गृहदेवार्चनविधिः ।

,, वैश्वदेवबलिनित्यश्राद्धकर्म्मविधिः ।

,, भोजनविधिः ।

,, सायंसन्ध्याहोमादिरात्रिपूर्व्वार्द्धकृत्यविधिः ।

,, शयनस्त्रीगमनविधिः ।

,, योगप्रकारः ।

,, स्पृष्टास्पृष्टविधिः ।

,, द्रव्यशुद्धिः ।

---

((३)११८।) काकचण्डेश्वरीमतम् . 10×3½ inches. Folia, 50. Lines, 7 on a page. Extent, 700 çlokas. Character, Nāgara. Date, (?). Appearance, new. Verse. Incorrect.

Beginning. श्रीगणेशाय नमः ।

अम्बादिदेवदेवेशमहं पृच्छामि शङ्करम् ।

स्कन्दाद्याश्च महामाया शङ्का चैव विनायकैः ॥

श्रीवक्रतुण्डाय नमः ।

कैलासशिखरासीन उमासार्द्धं जगद्गुरुः ।
योगिन्यष्टकतन्त्रे च गुह्याद् गुह्यतरं परम् ॥
सर्व्वज्ञानप्रकाशाय सर्व्वज्ञा सर्व्वकृच्छ्रयः ।
एतैः कार्य्यं कथं देव त्वया सर्व्वं ममोपरि ॥

श्रीईश्वर उवाच ।

कङ्काली कालरात्री च काकचण्डा च चाम्बिका ।
कङ्काली कालरात्री च काकचण्डेश्वरी मता ॥
एवमाद्या तथा कान्यो योगिनीगणनायकैः ।
नृत्यवाद्यवचोभेदैः सानन्दैर्हृष्टचेतसाम् ॥
ततस्तं भैरवं देवं योगिनीगणवेष्टितम् ।
केचित् स्तुवन्ति संहृष्टाः केचित् स्तुवन्ति हृष्टकाः ॥
केचिन्नृत्यन्ति तस्याग्रे केचिद्धास्यञ्च कुर्व्वते ।
एतैस्तु ज्ञानभक्तैस्तु अर्चितस्तत्र भैरवः ॥

श्रीदेव्युवाच ।

दृष्ट्वा तु भैरवं देवं पञ्चवक्त्रं त्रिलोचनम् ।
सानन्दं त्रिदशेशस्य बद्धाञ्जलिरभाषत ॥
काकचण्डेश्वरी देवी उमादेवी च भैरवी ॥

श्रीभैरव उवाच ।

सारभूतं यथा देवि महाज्ञानस्य निर्भयम् ।
ज्ञानवादात्तु यत्पूर्व्वं मानवैस्वल्पसिद्धिदः ॥
न पश्यति इदं ज्ञानमल्पपादे सगामिनाम् ।
वेदानाञ्च वयोऽर्थेन न सिद्धिस्तेन विद्यते ॥
अथवा संवरारोहे काकचण्डेश्वरीमते ।
मुक्तार्थं निखिलं देवि सर्व्वोपाधिविवर्जितम् ॥

श्रीकाकचण्डेश्वर्य्युवाच ।

कथं काये स्थितो जीवः कोऽसौ जीवः प्रकीर्त्तितः ।
कस्मात् स कुरुते कर्म्म स्थितः संसारपञ्जरे ॥

जराव्याधिदरिद्रैश्च ग्रस्तः संसारबन्धने ।
एके क्रमन्ति जंघल्ये एके स्कन्धवहेन तु ॥
जयश्चन्द्रश्च मातङ्गस्त्वं एकस्यानेकजन्तवः ।
किं कुर्व्वाणमकुर्व्वन्ति तस्मात् त्वं ब्रूहि शङ्कर ॥

श्रीईश्वर उवाच ।

शृणु त्वं काकचामुण्डे साधकानां हितं प्रिये ।
गुह्याद्गुह्यतरं वाक्यं त्वया पृष्टं वरानने ॥
कथयामि समासेन काकचण्डेश्वरि शृणु ।
योऽसावात्मा परो नित्य अनादिनिधनेश्वरः ॥
स्वरूपं निर्गुणं चापि सर्व्वव्यापी निरामयः ।
अनादिकर्म्मसम्बद्धः कायस्थो भवने सदा ॥
जीवोपाधिमयं कर्म्म अज्ञाने संप्रवर्त्तते ।
तस्मात् कर्म्म प्रयत्नेन संसारे सेवते त्वसौ ॥
करोति विविधं कर्म्म संसारे काममोहितः ।
द्रव्योपायं न जानाति कालभोगेन हेतुना ॥
.. .. .. .. .. .. ..
.. .. .. .. .. .. .. ..
एकन्तु कथितं भद्रे यत् त्वया परिपृच्छता ।
किमन्यत् पृच्छसे भद्रे तथान्यत् कथयाम्यहम् ॥
काकचण्डेश्वरीशास्त्रं कथितं निश्चयाम्यहम् ॥
इति काकचण्डेश्वरीमते ।

काकचण्डेश्वर्य्युवाच ।

कथयामि महादेव कामभोगप्रसाधनम् ।
अर्थः संपद्यते येन अल्पीयात् परमेश्वर ॥
तदहं श्रोतुमिच्छामि कथयस्व प्रसादतः ।
पादुकापलयो पक्ष दिव्यस्त्रीकामसाधनम् ॥
अञ्जनं इंदृशश्चैव गुटिका चैव खेचरी ।
साधकानां हितं देव भूचराकाशगामिनी ॥

जलुकाबन्धमित्याद्य धातुवादरसायनम् ।
जारणं मारणञ्चैव अभ्रकस्य च द्रावणम् ॥
अर्थोपायश्च देवेश ब्रूहि मे त्रिपुरान्तक ।
रसकर्म्म यथा देव सारभूतं वदस्व मे ॥

महादेव उवाच ।

शृणु त्वं काकचाण्डि साधकानां हितं प्रिये ।
कथयामि समासेन प्रश्नं यत् सिद्धिसाधनम् ॥
न द्रव्येण विना सिद्धिर्न भोगं काममेव च ।
द्रव्यहीना नरा मर्त्त्ये प्रेतरूपेण संस्थिताः ॥

.. .. .. .. .. .. ..

.. .. .. .. .. .. ..

तस्मात् साधय देवेशि रसेन्द्रं साधकेश्वरः ।
तदेवं कथयाम्यस्य साधकानां हितं प्रिये ॥ इत्यादि ।

End. कृष्णसारस्तगश्रृङ्गकं यथा सूक्ष्मचूर्णकृतदण्डिकास्थितम् ।
भावयेत् खुहिलमोचिकारसे उद्धृतं समदुग्धजिदाहितम् ॥
चण्डेश्वराख्यां प्रवदन्ति सन्तः दद्यात् जलेनैव सवोषकररम् ।
प्रभातकाले ह्यरुणोदये वा भूतं ज्वरं शान्तिमुपैति चोक्तः ॥
कुष्ठं गन्धकविषदोचिफला पारदः समः ।
सम्याम्बुमर्द्दिताह्यैते मुद्गमाषवचीकृताः ॥
ज्वरं हन्त्यष्टभिर्यामैश्चाष्टप्रहरकाणि वा ॥

Colophon. इति काकचण्डेश्वरीमतं समाप्तम् ॥ शुभमस्तु सदा ।

---

(१५४८।) कातन्त्रविस्तरः. By वर्द्धमान. 12×3 inches. Folia, 85. Lines, 6 on a page. Extent, 1,638 çlokas. Character, Nāgara. Date, Samvat, 1589. Appearance, old. Prose. Generally correct.

Beginning. श्रीगणेशाय नमः ।

महेश्वरं नमस्कृत्य कुमारं तदनन्तरम् ।
सुगमः क्रियतेऽस्माभिरयं कातन्त्रविस्तरः ॥

अभियोगपराः पूर्व्वं भाषायां यत्न प्रपेदिरे ।

प्रायेण तदिहास्माभिः परित्यक्तं न किञ्चन ॥

सिद्धो वर्णसमाम्नायः । तत्र चतुर्द्दशादौ स्वराः । दश समानाः तेषां द्वौ द्वावन्योन्यस्य सवर्णौ ॥ इत्यादि ।

End. अनुपसर्गात् फुल्लचीवकृशोल्लाघाः । उत्फुल्लसंफुल्लपरिकृशाः । अवर्णावृटो वृद्धिः ॥

Colophon. इति श्रीमत्कर्णदेवोपाध्यायश्रीवर्द्धमानविरचिते कातन्त्रविस्तरे कृत्-प्रकरणे षष्ठः पादः समाप्तः ॥ संवत् १५८९ समए कार्त्तिकशुदि तृतीया गुरौ । मिश्र – – – लिखापितम् । शुभं भवतु ।

विषयः । इति श्रीमत्कर्णदेवोपाध्यायश्रीवर्द्धमानविरचिते कातन्त्रविस्तरे प्रथमः सन्धिः समाप्तः ।

,, द्वितीयः सन्धिः समाप्तः ।

,, तृतीयः सन्धिः समाप्तः ।

,, चतुर्थः सन्धिः समाप्तः ।

,, पञ्चमः सन्धिः समाप्तः ।

,, नाम्नि प्रथमः पादः समाप्तः ।

,, ,, द्वितीयः ,, ,, ।

,, ,, तृतीयः ,, ,, ।

,, कारके प्रथमं प्रकरणम् ।

,, ,, द्वितीयं ,, ।

,, ,, तृतीयं ,, ।

,, ,, चतुर्थं ,, ।

,, समासविस्तरे प्रथमं प्रकरणम् । द्वितीयं । तृतीयं । चतुर्थञ्च ।

,, तद्धिते प्रथमं प्रकरणम् । ततः – २—१० प्रकरणानि ।

,, आख्यातविस्तरे प्रथमं प्रकरणम् । ततः – २—७ प्रकरणानि ।

,, कृद्विस्तरे प्रथमं प्रकरणम् । ततः – २—६ प्रकरणानि ।

इति समाप्तम् ।

(१२६४ ।) कालमाधवकारिकाव्याख्यानम् . 10×4 inches. Folia, 32. Lines, 11 on a page. Extent, 990 çlokas. Character, Nāgara. Date, (?). Appearance, fresh. Prose. Incorrect.

**Beginning.** श्रीमद्गणाधिपतये नमः ।

नत्वा गजाननदेवमगजाननदेव – – ।

कालमाधव – – – – विरचिथे यथामति ॥

विघ्नविघाताय मङ्गलमाचरति । वागीशाद्या इति । इत्यादि ।

**End.** अथोदय्यादित इति । एतदपवादं दर्शयति नित्यनैमित्तिकेति ।

**Colophon.** इति श्रीमद्गुर्म्मशास्त्रपारावारीणा – – भट्टरामचन्द्रभट्टात्मजभट्टवैद्यनाथसूरिकृते कालमाधवीयकारिकाव्याख्याने पञ्चमं प्रकरणं सम्पूर्णं।

काशीविश्वेश्वरो विजयते । शुभमस्तु ।

---

(२) १३० ।) कालीकुलार्णवतन्त्रम् . 12×4 inches. Folia, 56. Lines, 7 on a page. Extent, 1,176 çlokas. Character, Newārī. Date, Newār Era, 867. Appearance, fresh. Prose and verse. Incorrect.

**Beginning.** ॐ नमो गणाधिपाय ।

श्रीवीरनाथोवाच ।

कैलासशिखरासीनं देवं त्रिभुवनेश्वरम् ।

प्रणम्य शिरसा देवी पृच्छते कालिका हरम् ॥

ॐ गुह्यकालिकाये । तथातो अथर्व्वणसंहितायां ।

श्रीदेव्युवाच ।

ॐ मर्म्माभिघातिनी नमोनमः ।

सामरस्य स्थिता देवो द्वैताद्वैतविवर्जितः ।

पृच्छते कालिका देवी भैरवं भुवनेश्वरम् ॥

प्रलयानलसङ्काशं जगद्रक्षणतत्परम् ।

देवाधिदेवतं भीष्मं द्वैताद्वैतस्य स्थापनम् ॥

येन तेषां प्रतुष्यन्ति तेषां तत्र महत् फलम् ।

तत्र तेषां महाधर्म्मा अद्वैतं नित्यभावनः ॥

द्वैतं विकल्पकं चैव अद्वैतं कथयस्व मे ।
इति पृष्ट तदा देवो कालिका हृदिसाश्रयम् ।
गुह्यकाल्याक्रमं पुण्यं षडाम्नायप्रपूजितम् ॥

श्रीभैरव उवाच ।

शृणु देवी महागुह्यं प्रलयानलसन्निभम् ।
कथयामि समासेन गोपनीयं प्रयत्नतः ॥ इत्यादि ।

End. ॐ फ्रं सिद्धिकालीके आप्यायननवपञ्चचक्रेश्वरीनिलयघोराट्टहासिनी कलासहस्रनिवासिनी खं ३ छ्री फ्रं ३ अवर्णेश्वरी प्रकृत्यापरशिवनिर्व्वाणदायिनी स्वाहा । १०० मूलशताक्षरीमन्त्राः ॥

Colophon. इति श्रीकालीकुलार्णवं सम्पूर्णं ॥
यादृशं पुस्तकं — — — । शुभ सम्वत् ८९० पोष शुदि ७ सोमदिने सम्पूर्णं लिखितमिति शुभम् ।

---

(१५३९।) कालीतत्वम् (आचारप्रतिपादनतत्वम्) (खण्डिताद्यम्) By राघवभट्ट. 10×3 inches. Folia, 15 (leaves 1–3 are missing). Lines, 7 on a page. Extent, 177 çlokas. Character, Newāri. Date, (?). Appearance, fresh. Prose and verse. Incorrect.

Beginning. (४र्थ पत्रस्य प्रारम्भवाक्यं लिखितम् ।)

कालीतन्त्रेऽपि ।

बलिदानं विना देवि हिंसां सर्व्वत्र वर्जयेत् ॥ इति ।
वीरद्रव्यापहारी च दिव्यस्त्रीनिन्दकस्तथा ।
कौलतन्त्रमनूनाश्च साधकानां तथा पुनः ॥
कौलिको निन्दको यस्तु प्रायश्चित्तं समाचरेत् ॥
इति धर्म्मलोपादिजातपापक्षयार्थं धर्म्मप्राप्त्यर्थञ्च दिव्यवीरयोरर्च्चनं कुर्य्यात् ॥ इत्यादि ॥

End. नित्या नैमित्तिकी काम्या दिनरात्र्युभयक्रमात् ।
कर्त्तव्या कुलशास्त्रज्ञैः पूजावैभवविस्तरैः ॥

Colophon. इति श्रीराघवभट्टविरचिते श्रीकालीतत्त्वे आचारप्रतिपादनं नामैकादशतत्त्वम् ॥

विषयः । तान्त्रिकाणामाचारनिरूपणम् ।

---

(१५३८ ।) कालीतत्त्वम् (प्रायश्चित्तविधिः) By राघवभट्ट. 10×3 inches. Folia, 5. Lines, 7 on a page. Extent, 60 çlokas. Character, Newārī. Date, (?). Appearance, fresh. Verse. Incorrect.

Beginning. अथ प्रायश्चित्तविधिरुच्यते ।
तदुक्तं लिङ्गागमे ।
शृणु देवि प्रवक्ष्यामि प्रायश्चित्तमनुत्तमम् ।
तच्छुद्धिविधिश्चैव भैरवेशेन भाषितम् ॥
गुरुत्यागकरः शिष्यः प्रायश्चित्ती भवेद्ध्रुवम् ।
लक्षं श्रीपादुकां जप्त्वा तस्मात् पापाद् विशुध्यति ॥ इत्यादि ।

End. तत्प्रायश्चित्तहीनानामशक्तानां कुलेश्वरि ।
दिव्यवीरार्चनं तेषां प्रायश्चित्ताय कल्प्यते ॥

Colophon. इति श्रीराघवभट्टविरचिते कालीतत्त्वे प्रायश्चित्तविधौ चतुर्दशतत्त्वं।

---

(१९६३ ।) कुलसारसङ्ग्रहः (आदिखण्डितः). 11×3 inches. Folia, 7. Lines, 7 on a page. Extent, 107 çlokas. Character, Newārī. Date, (?). Appearance, fresh. Verse. Incorrect.

Beginning. – – – विधिं देव श्रोतुमिच्छामि तत्त्वतः ।
एतन्मे संशयं छिन्धि येन चिन्त्यमिदं मतम् ॥
श्रीईश्वर उवाच ।
– – ते कथयिष्यामि कुलसारं समासतः ।
एतत् प्रश्नो मे देवि ब्रह्माग्रे कथितं पुरा ॥
तत्र ब्रह्मा समग्रेण निजगाद यथा शृणु ॥ इत्यादि ॥

End. विश्वस्तम्भानि कर्माणि – – – – मारणम् ।
जयस्मि विभवे न्यूनं तस्य तुल्यं कथं सुराः ॥

Colophon. इति श्रीग्रन्थतमपने सोमशुजङ्गवल्यां कुलसारसङ्गहे षट्त्रिंशति-
पटलः समाप्तः ॥

सोमशुजङ्गपद्धतिमिति समाप्तः ॥

शुभमस्तु साधकानां ॥

---

(१४१२।) गणकमण्डनम्. By नन्दिकेश्वर. 12×4 inches. Folia, 8. Lines, 12 on a page. Extent, 252 çlokas. Character, Nāgara. Date, (?). Appearance, fresh. Verse. Incorrect.

Beginning. श्रीगणेशाय नमः।

नत्वा देवं गणेशञ्च श्रीमद्वेदाङ्कुरायजः।
नन्दिकेश्वरसंज्ञोऽहं वक्ष्ये गणकमण्डनम् ॥
पूर्व्वाश्लेषा च मूलाग्निमघा – – – – नि च।
अधोमुखानि भान्येषु खननोद्धारणानि च ॥
हस्तत्रयं – – – – – – – – मित्रादित्येन्द्रभानि च।
तिर्य्यङ्मुखानि तेषु स्यात् पशूनां दमनादिकम् ॥

— — — —

मृदुध्रुवचरक्षिप्रैर्श्चक्षितेः प्रथमार्त्तवम्।
शुभं सपूत – – शेषे – – सुखावहम् ॥
इति प्रथमार्त्तवं। इत्यादि।

End. पुष्यः परकृतं हन्ति न तु पुष्यकृतं परः।
दोषस्त्वनिष्टगेपीन्दौ पुष्यः सर्व्वार्थसाधकः ॥
इति पुष्यार्कप्रशंसा।

— — (अतःपरं खण्डितम्।)

विषयः। इति प्रथमार्त्तवम्।
„ ऋतुस्नानम्।
„ गर्भाधानम्।
„ सीमन्तोन्नयनम्।
„ सूतिकागृहप्रवेशः।

इति कर्णवेधः ।

„ अक्षरप्रवेशः ।

„ शिल्पविद्यारम्भः । इत्यादि ।

---

(२४१२ ।) गायनलोचनम्. 10×4 inches. Folia, 4. Lines, 8 on a page. Extent, 80 çlokas. Character, Nāgara. Date, Saka Era, 1706. Appearance, fresh. Verse. Generally correct.

**Beginning.** श्रीगणेशाय नमः ।

अथ गायनलोचनानि लिख्यन्ते ।

प्रातर्गेयस्तु देशाखो ललितः पटमञ्जरी ।
विभासो भैरवी चैव कामोदो गोण्डगौर्य्यपि ॥
एकावराड़ी मध्याह्ने सायं कार्णाटमालवौ ।
नाटश्चैव विशेषेण शेषा ज्ञेयास्तु सर्व्वदा ॥
नाटो गौड़ो वराड़ी च गुर्ज्जरी देशिरेव च ।
पूर्व्वाह्णे गानमेतेषां निषिद्धमिति तद्विदः ॥ इत्यादि ।

**End.** देवदानवगन्धर्व्वाः सदा गीतानि कुर्व्वते ।
मया च सेवितं गीतं तस्माद्गीतं प्रशस्यते ॥

**Colophon.** इति गायनलोचनं समाप्तम् ।

सङ्गीतचूड़ामणौ ।

तकारे पवनः प्रोक्त एकारे कमलासनः ।
नकारे नन्दिकेशः स्याद्दाकारे मधुसूदनः ॥
ब्रह्मा-विष्णु-हराश्चात्र रागे तिष्ठन्ति सर्व्वदा ।
तेन सङ्गीतमात्रेण विघ्नं नश्यति निश्चितम् ॥
शिशुर्वेत्ति पशुर्वेत्ति वेत्ति गीतं फणी तथा ।
हा कष्टं शिव साक्षी त्वं न विदन्ति बुधा मम ॥
गुणिहस्तगताः काशुशिक्षाद्याः शिल्पसाधनम् ।
निरक्षरनरः कोऽपि न जानाति गुणाश्रमम् ॥
श्रीशङ्करः प्रीयतात् । श्रीशाके १७०६ भाद्रवदि ५ ।
तद्दिने लिखितमिदं किरीटमालिशर्म्मणा ॥
लेखकपाठकयोः शुभमस्तु ।

---

(११६०।) गोलोद्देशः. By दामोदर. 11×3 inches. Folia, 62. Lines, 9 on a page. Extent, 1,589 çlokas. Character, Nâgara. Date, Newâr Era, 830. Appearance, fresh. Verse. Incorrect.

Beginning. श्रीगणेशाय नमः ।

रुष्टे यस्मिन्नवृष्टिः स्यात् तुष्टे यस्मिन् सुवृष्टयः ।
सर्व्वसिद्धिप्रदातारं तं वन्दे दुण्ढिनायकम् ॥
— — — गोलरचनां युक्तिसिद्धां मनोरमां ।
प्रवक्ष्याम्यविरोधेन ज्योतिःशास्त्रपुराणयोः ॥
गर्गः । यतो वाचो निवर्त्तन्ते मनो यत्र न गच्छति ।
नित्येदुष्येश्वरस्येच्छा वेदरूपा विजृम्भते ॥
ब्रह्म-विष्णु-महेशाद्या ब्रह्माण्डानि च देवताः ।
पूर्व्वं नानाविधाः सृष्टाः सृजिष्यत्यप्यनेकधा ॥
प्रोक्तं वेदेषु तत्सर्व्वमिदानीन्तनमुच्यते ।
रामचन्द्र महाराज ब्रह्मख्यस्मिन् प्रजापतौ ॥
ब्रह्माण्डं यादृशं सृष्टं तादृशं शृणु तत्त्वतः ॥ इत्यादि ।

End. कुरुवंशोद्भवो राजा कुन्तीपुत्रो युधिष्ठिरः ।
वेदवेदाश्वरामाब्दं स्वं शकं चालयिष्यति ॥
३०४४ ज्ञातेऽधर्म्मे पुनाराजा विक्रमार्को भविष्यति ।
पञ्चत्रिचन्द्रवर्षाणि स्वं शकं चालयिष्यति ॥
१३५ शालिवाहो नृपो नाम शङ्कराराधने रतः ।
ततः खव्यष्टचन्द्राब्दं स्वं शकं चालयिष्यति ॥
१८३० नागार्ज्जुनस्ततो भूपो हत्वा म्लेच्छगणं रणे ।
चतुर्लक्षमिताब्दानि स्वं शकं चालयिष्यति ॥
४००,००० दुष्टम्लेच्छगणविजयाभिनन्दनमहीश्वरः । ?
अयुताब्दं स्वीयशकं चालयिष्यति धर्म्मराट् ॥
ततो जातेषु बौद्धेषु म्लेच्छेषु भगवान् हरिः ।
कल्की भूत्वा स्वर्गगजवर्यैः सर्व्वान् हनिष्यति ॥
इति दुण्ढिराजगणेशस्य नामोच्चारणपुण्यतः ।
गोलोद्देशः संगृहीतो नातिसंक्षिप्तविस्तृतः ॥

Colophon.ै इति दामोदरकृतौ गोलोद्देशे कालनिर्द्देशादेशो दशमः ॥

इति गोलादशाः पफाशा । अथ संख्यापक ११०० ।

अश्वरामगजे संख्ये नेपालाब्दे गते रवौ ।

नवम्यां वदर्यां पच्ले गोलाध्यायो व्यलीलिखत् ॥

विषयः । इति० पातालनिरूपणं प्रथमः ।

इति० मृत्युलोकनिरूपणम् । २ ।

इति० स्वर्गनिरूपणम् । ३ ।

इति० मध्यगतिवासनाधिकारः । ४ ।

इति० स्पष्टगतिवासनाधिकारः । ५ ।

इति० त्रिप्रश्नवासनाधिकारः । ६ ।

इति० ग्रहणादिवासनाधिकारः । ७ ।

इति० नक्षत्रसंस्थानाधिकारः । ८ ।

इति० उत्पातोत्पत्त्यधिकारः । ९ ।

इति० कालनिर्द्देशादेशः । १० ।

---

(२४१२ ।) ग्रहदर्पणः By गौरीश्वर. 12×4 inches. Folia, 12. Lines, 9 on a page. Extent, 270 çlokas. Character, Nāgara. Date, (?). Appearance, fresh. Verse. Generally correct.

Beginning. श्रीगणेशाय नमः । श्रीगुरवे नमः ।

यद्बुधाग्रे गाढमतः परीतं

जगन्नवीभूतमिव प्रभाति ।

महोनिधिर्विश्वविधुस्त्रिमूर्त्ती

रविर्मुदे नोऽस्तु स देवदेवः ॥

गिरं गणेशं विधिविष्णुरुद्रान् गुरून् प्रधानर्कमुखांश्च मूर्द्ध्ना ।

प्रणम्य गौरीश्वर आतनोति ब्रह्मोक्ततुल्यं ग्रहदर्पणाख्यम् ॥

शाकोऽङ्कमैधाग्नि ३१७९ युतः कलेः

स्याच्छाकाब्दपिण्डाश्च युगावधीह । (?)

युगाधिकश्चेद् युगशेषितोऽसौ

युगाश्च दन्त्यङ्कयुतैः शरङ्कैः ॥ इत्यादि ।

End. चरज्यार्क ११ घातस्त्रिभज्योद्धृतं तत्
फलं वर्जितज्याद्यभावर्गयुक्तम् ।
हृता तत्पदेनार्कनिघ्नीचरज्या
भवेत् चापमज्या ततः प्रागुवद्दर्कः ॥

इतीह० । तथाधिकारोप्यगमत् तृतीय-
त्रिप्रश्नसंसाधनहेतुरेषः ॥
(अतः परं खण्डितम् ॥)

विषयः । इतीह गौरीश्वरसम्मितेऽर्कसिद्धान्ततुल्ये ग्रहदर्पणाख्ये ।
खचारमध्यानयनाधिकारो गतोऽयमाद्यो गणितज्ञहृद्यः ॥
इतीह० ।
अथ ग्रहाणां स्फुटकर्मसिद्धेर्हेतुर्द्वितीयोऽपि गतोऽधिकारः ॥
इतीह० ।
तथाधिकारोऽप्यगमत् तृतीयस्त्रिप्रश्नसंसाधनहेतुरेषः ॥

---

(२) ३२।) ग्रहप्रकाशः By काशीनाथ. 11×4 inches. Folia, 22. Lines, 9 on a page. Extent, 396 çlokas. Character, Nāgara. Date, Saka Era, 1735. Appearance, fresh. Prose and verse. Generally correct.

Beginning. श्रीगणेशाय नमः । श्रीसरस्वत्यै नमः । श्रीगुरुचरणारविन्देभ्यो नमः ।

श्रीसूर्यनारायणमादिदेवं
चतुर्भुजं भास्करमण्डलस्थम् ।
त्रयीमयं विश्वविबोधहेतुं
तं नौमि नित्यं धिषणाभिसिद्धेर ॥

प्रणम्य मूर्द्ध्ना गणपं गिरिशं गिरं गुरुं श्रीनृहरिं पितृंश्च ।
ग्रहप्रकाशं मिहिरोक्तिरीत्या सिद्धान्तसारस्य इकं व्यनक्ति ॥

.. .. .. .. .. ..

श्रीसूर्यसिद्धान्तमतं समस्तमुद्धृत्य सारं नरदेवतुष्ट्यै ।
स्वल्पक्रियं दैवविदां हिताय खेशामिनां स्पष्टतरं सुबोधम् ॥

इत्यादि ।

End. ब्रह्मोक्तं सकलं वशिष्ठमुनिवर्य्योक्तं तथार्कोदितं
दृष्ट्वा तत्त्वविवेकभेदममलं श्रीसौरभाष्यादिकम् ।
सिद्धान्तोक्तमहाखिलं लघुकृतं सिद्धान्तसारास्पदं
नाम्नोच्चं करणं श्रीसूर्य्यभणितं श्रीकाशिनाथोऽकरत् ॥

Colophon. इतीह सौरोक्तग्रहप्रकाश-
राजेन्द्रविक्रमनृपस्य सनुःशकाब्दात् ।
श्रीकाशिनाथगणकेन विनोदितोऽय-
मलंकृतोऽयमगमत् समाप्तिं ॥ ?
सूर्य्योपदेशाल्लिखितं मयात्र एकादशाख्योऽधिगतोऽधिकारः ।

विषयः । इतीह० । खेगामिमध्यानयनाधिकारः ॥
,, पश्चाङ्कपत्रानयनाधिकारः ॥
,, न भोगपष्ठानयनाधिकारः ॥
,, त्रिप्रश्नसंस्थानयनाधिकारः ॥
,, शीतांशुपर्व्वानियनाधिकारः ॥
,, मार्त्तण्डपर्व्वानियनाधिकारः ॥
,, चन्द्रार्क .. पर्व्वद्वयाधिकारः ।
,, पातद्वयो साधनकोऽधिकारः ॥ (?)
,, सौराद्मिानानयनाधिकारः ॥
,, कालस्य विज्ञानयनाधिकारः ॥

---

(१६१२।) चतुरङ्गतरङ्गिणी By वंशमणि. 12×2 inches. Folia, 15. Lines, 4 on a page. Extent, 165 çlokas. Character, Maithila. Date, (?). Appearance, fresh. Prose and verse. Incorrect.

Beginning. ॐ नमस्तस्यै ॥

यत् त्वं केलिपणे पराजितवती कल्याणि श्रोणाम्बुजं
तद्देहि + तदीश दर्शय करं हे नाथ तद्दृश्यताम् ।
इत्युक्ते रमया करेण कलहं तस्याः कराम्भोरुहं
स्मेरस्मेरमुखः सुखाय जगतां देवोऽस्तु दामोदरः ॥

श्रीकृष्णानन्दरायस्य वाचा विनयशालिनः ।
बुधो वंशमणिश्चक्रे चतुरङ्गतरङ्गिणीम् ॥ इत्यादि ॥

End. इनने यत्र वटिकाद्वयशेषोऽस्ति – – – ।
उत्थानं तत्तूराज्ञो – – – प्रकीर्त्तितो ॥
तादृशदहननप्रवेश – – – – मुत्थानस्थमित्यर्थः ॥

Colophon. इति श्रीमद्दो – – – –वंशमणिकृतायां चतुरङ्गतरङ्गिण्यां द्वितीयप्रवेशाख्तिरङ्गः । समाप्ता चेयं चतुरङ्गतरङ्गिणी ।

---

(११९२।) चमत्कारचिन्तामणिः. By ऋषि. 6×3 inches. Folia, 7. Lines, 13 on a page. Extent, 182 çlokas. Character, Nāgara. Date, (?). Appearance, old. Verse. Incorrect.

Beginning. श्रीगणेशाय नमः ।
न चेत् खेचराः स्थापिताः किं चक्रे
न चेत् स्पृशाः स्थापितैर्ग्रहेन्द्रैः ।
अभावाद्धि ते स्पृष्ता कोऽत्र हेतुः
फलैरेव सर्व्वं ब्रुवे तानि तस्मात् ॥
तनुस्थो रविस्तुङ्ग × ष्ठि विधत्ते
मनस्थं तपे दारदायादवर्गात् ।
वपुः पीड्यते वातपित्तेन नित्यं
स वै पर्य्यटन् ह्रासवृद्धिं प्रयाति ॥
धने यस्य भानुः स भाग्याधिकः स्यात्
चतुष्पात् सुखं सद्व्ययं स्वं च पाति ।
कुटुम्बे कलिर्जायते जाययापि
क्रिया निष्फला याति राभस्यहेतोः ॥ इत्यादि ।

End. शिखी रिपुगः पादनेत्रे च पीड़ा
स्वयं राजतुल्योऽप्ययं सत्करोति ।
रिपुर्नाशनं मातुले × × शम्मी-
कलैः पीड्यते वस्तिगुह्ये सदैव ॥
इति केतुभावफलम् ॥

Colophon. इति ऋषिविरचिते चमत्कारचिन्तामणौ भावाध्यायः समाप्तः ।

विषयः । रविभावफलम् । चन्द्रभावफलम् । भौमभावफलम् । बुधभावफलम् । गुरुभावफलम् । शुक्रभावफलम् । शनिभावफलम् । राहुभावफलम् । केतुभावफलम् ॥

---

(३)७६ ।) चिकित्सामृतम् (मध्यखण्डितम् .) By मिल्हन. 12×5 inches. Folia, 134. Lines, 7 on a page. Extent, 2,437 çlokas. Character, Nāgara. Date, (?). Appearance, fresh. Verse. Generally correct.

Beginning. श्रीगणेशाय नमः ।

बीजं युतीनां सुधनं मुनीनां
जीवं जड़ानां महदादिकानाम् ।
श्राग्र्यमस्त्रं भवपातकानां
किञ्चिन्महः प्रणामलमाश्रयामि ॥
एत्या कपोलमधुवारि मधुव्रताली
कुम्भस्थलीमदविधूषणशोहिताङ्गी ।
माणिक्यमौलिरिव राजति यस्य मौलौ
विघ्नं शतं हरतु विघ्नपतिः सदा वः ॥

.. .. .. ..

केचित् सन्ति निघण्टवोऽतिलघवः केचिन्महान्तः परे
केचिद् दुर्गमनामकाः कतिपये भावस्वभावस्थिताः ।
तस्मान्नापि लघुर्न वापि विपुलः ख्यातादिनामा सतां
प्रीत्यै द्रव्यगुणान्वितोऽयमधुना ग्रन्थो मया बध्यते ॥
सर्व्वकार्य्येण यत् साध्यं प्रकारस्थितिकारणम् ।
आयुर्वेदोपदेशस्तु कथ्यमानः सुखावहः ॥

(स्रोकार्थेते चिकित्सामृतस्य किं न वेति महान् सन्देहः । मध्ये चास्य प्रथमपत्रं नास्ति । अतो द्वितीयपत्रस्य प्रारम्भवाक्यं लिख्यते ।)

... वरस्य ।

दीप्तानलस्यापि विपाकशुद्धि-
स्तस्यातिसारः समभेव यातः ॥

अतीसारनिदानं ।

आदावामातिसारे त्रिकगुरुखगण. . . . शूलाभिपन्ने
तापा. . . . स्वगर्त्ति प्रबलतरमहारोचकाद्येति गन्धे ।
अस्मिन् दोषानुसारव्यतिकरविहितैर्लङ्घनाद्यैरुपायैः
क्वाथैः पेयादिपथ्यैः कृतपुटविधिभिर्भेषजैः. . . . मकुर्य्यात् ॥
अवेदनं सुसंपक्वं दीप्ताग्नेः सुचिरोत्थितम् ।
नानावर्णमतीसारं पुटपाकैरुपाचरेत् ॥ इत्यादि ॥

End. शुष्कं कासति यः प्रभातसमये सम्पूर्णकायोऽथवा
हीनाङ्गः कफकामयानय निर्जं क्षायां विकारावृताम् ।
पश्यत्येव मुखं न दर्पणगतं यो वातिसारी भ्रमं
सूनो वा जठरे नरः स नियतं प्राप्नोति याम्यं सुखम् ॥
इति कतिपयवृत्तैः सारभूतं मयोक्तं
पटुमतिपठनार्थं प्राखिरिष्टप्रबन्धम् ।
विविधमुनिसुवाक्यैस्तापरैः सूक्ष्मरूपं
विदुरखिलगदज्ञा दीर्घपाठ + मार्ये ॥

Colophon. इति चिकित्सामृते मिल्हनकृते रिष्टाधिकारः ॥
पूर्व्वाचार्य्यप्रबन्धोदधिपरिमथनात् प्राप्य फेनोपमानान्
योगान् सिद्धोपयोगान् प्रविहितममलं सचिकित्सामृताख्यम् ।
नानाच्छन्दोविनोदानुभवपरिलसच्छास्त्रमेतद्विगम्य-
स्तावद्ध्यात् सुभूसत्सदसि वरयशोधावलध्वौ पयांसि ॥ ?
श्रीसूरसेनदेशे त्रिभुवनपालेन भूमिपालेन ।
त्रिभुवनगिरिरतिदुर्गः पूर्व्वं दुर्गाधिपः सृष्टः ॥
तत्र च जायसमंत्रो वंशो भूपालवंशजोऽभूत् ।
तत्र कुलोद्धरनामा वैद्याचार्य्योऽजनि प्राज्ञः ॥
तद्वंशजो गुणाढ्यो मिल्हननामाखिलामयज्ञाने ।
भेषजविधौ च बुद्धिर्यस्याश्चर्य्यप्रदा लोके ॥
तेन कृतं वरशास्त्रं हिताय लोकस्य टिल्लिकानगरे ।
द्वादशशतेष्वशीत्या सहिते विक्रमनृपस्याब्दे ॥

गर्जनकगोह्मगूर्जरपर्य्यन्तां मेदिनीं महीनाथे ।
शासत्युर्व्वेश्वनहम्मीरे समसुद्दीनाख्ये ॥
यो देवेश्वरतनयो गङ्गाधरसंज्ञको द्विजः ।
योऽन्यः पवित्रसद्द्विजपुत्रो ग्रहचारचिकीर्षिः ॥ (?)
सद्वैद्यपद्मपुत्रो लोहटसंज्ञश्च बुद्धिमानपरः ।
एषां प्रपाठनाय प्रविस्तृतं धर्म्महेतोश्च ॥
ये वाञ्छन्ति च पुण्यं नृपपुरतश्च प्रभावमपि भिषजः ।
प्रपठन्तु तेऽपि मुक्ता नित्यं मात्सर्य्यमुग्रं च ॥
दोषाश्च चिह्नान्यपि भेषजानि
स्वभावसिद्धानि च तत्त्वविद्भिः ।
दृष्टान्यनादिप्रथितानि तस्मात्
काव्यापरत्वं मुनिवाक्यतोऽत्र ॥
यो मालवेशार्जुनवर्म्मणो गुरुः
कवीश्वरः श्रीमदनाभिधानः ।
समाहितं तेन महात्मना परं
यशोऽर्थिना शास्त्रमिदं भिषक्प्रियम् ॥
श्रग्रोतवंशोदयमाधवस्य सुक्षेममाहात्म्यवशात् पवित्रम् ।
विकाशितस्वात्मयशः प्रदीपयत् सुशास्त्रमेतत्कविमिल्हनेन ॥
शास्त्रेऽस्मिन् ग्रन्थसंख्यायां सहस्राणां चतुष्टयम् ।
द्वात्रिंशदुत्तरैः श्लोकैर्विज्ञसे गणिते सति ॥
इदं चिकित्सामृतनामधेयं सुशास्त्रसारं भिषजां हिताय ।
– – – – मिल्हनेन परोपकाराय सतां विभूतिः ॥
विगलितसकलकलङ्का निर्म्मलहृदया सदैव या वसति ।
– – – – – विमले स जयति सरस्वती सुचिरम् ॥

.. .. .. .. .. .. .. ..

विषयः । इति० भगन्दराधिकारः ।
,, विस्फोटकाधिकारः ।
,, श्लीपदाधिकारः ।

इति० वातरोगाधिकारः ।

,, उन्मादाधिकारः ।

,, मदात्ययदाहाधिकारः ।

,, नानाक्षुद्ररोगाधिकारः ।

,, नेत्ररोगाधिकारः ।

,, नासामयाधिकारः ।

,, स्त्रीरोगाधिकारः ।

,, बालरोगाधिकारः ।

,, विषाधिकारः ।

,, वाजीकरणविधिः । इत्यादि ।

---

(७६६ ।) चिञ्चिनीमतसारसमुच्चयः. 7×2½ inches. Folia, 69. Lines, 6 on a page. Extent, 1,428 çlokas. Character, Nāgara. Date, (?). Appearance, fresh. Verse. Incorrect.

**Beginning.** ॐ नमो महाभैरवाय ।

दिव्यार्कबोधकमलोदरगर्भसंस्थं
विश्वात्मकं परमनिर्म(ल) मिह्ननाथम् ।
येनावतारितमहार्णवमध्यचन्द्र-
र्द्धीपाक्षरं परमचिञ्चिनिचितप्रकाशम् ॥
तन्मध्यनिर्गतमहाकुलवेधयन्ति
दिव्यान्तरीक्षगगनान्तरभूतलेषु ।
पातालचक्रविवरान्तरग्राहन्तीं
नमामि पश्चिमक्रमाद्यश्रीकुकालाम् ॥
.. .. .. .. .. ..
.. .. .. .. .. ..

(द्वितीयपत्रं नास्ति ।)

शाम्भवं शाक्तं ? शाक्तं भेदं श्रुत्वा मया प्रभो ।
कष्टात् कष्टतरं – – – – स साध्यं योगवित्तकैः ॥

ध्यानयोगरताः केचित् केचित् जपपरायणाः ।
प्राणायाममयाः केचित् अर्द्धचन्द्रकलाक्रमम् ॥
बिन्दुभेदरताः केचित् सांख्यज्ञाने स्थिताः परे ।
परकर्मरताः केचित् चक्षुन्मीलितसंस्थिताः ॥
सर्व्वे क्लिश्यन्ति ते नाथ न किञ्चित् प्रत्ययो भवेत् ।
विनान्वयप्रभेदेन आज्ञासिद्धिप्रकाशितम् ॥
सर्व्वशास्त्रार्थहृदयं — — — मुत्तमोत्तमम् ।
श्रीचिञ्चिनीमतसारस्य समुच्चय वदस्व मे ॥ इत्यादि ।

देव्युवाच ।

श्रुतं मया सर्व्वं मतसारसमुच्चयं ।
अद्यापि संशयो नाथ मन्त्रविद्या वदस्व मे ॥

.. .. .. .. .. .. ..

भैरव उवाच ।

शृणु देवि प्रवक्ष्यामि मन्त्रविद्या समुद्धरेत् ।
भूप्रदेशे समे शुद्धे अलिना लेपयेत् प्रिये ॥ इत्यादि ।

End. ब्रह्मेन्द्रविष्णुरुद्राणां नित्यं पूजयते प्रिये ।
जप्यमाना धियं दद्यात् खेचरत्वं प्रयच्छति ॥

Colophon. इति श्रीचिञ्चिनीमते सारसमुच्चये द्वादशः पटलः समाप्तः ॥

विषयः । चिञ्चिनीविद्यासाधनम् ॥

---

(११११.।) कृत्रयोगोद्भूतदोषशान्तिविधिः. By वाचस्पतिमिश्र. 10×4½ inches. Folia, 9. Lines, 9 on a page. Extent, 510 çlokas. Character, Nāgara. Date, (?). Appearance, fresh. Prose and verse. Generally correct.

Beginning. श्रीगणेशो जयतितरां ।

सुरगणार्चितपादसरोरुहं सुम इहोन्दुरुपृष्ठसमारुहम् ।
निखिलविघ्नविनाशकरं परं गणपतिञ्च भवार्त्तिहरं सुरम् ॥
श्रीवृन्दारकवृन्दवन्दितपदद्वन्द्वाम्बुजाराधना-
लब्धानेकमनोरथस्य भुवनप्रख्यातकीर्त्तेश्चिरम् ।

श्रीमल्लाइवहादुरस्य तनुते श्रीछत्रयोगोद्भवं
प्राप्याज्ञां सुविधिं सुनिर्म्मलमतिः श्रीमिश्रवाचस्पतिः ॥

अथ भृगुसिद्धान्तोक्तछत्रयोगसूचितमार्गानुसारेण पूजाभ्यते शुक्ल-कम्बलासनमास्तीर्य्यार्घ्यजलेनासनमभ्युक्ष्य न्टसिंहयन्त्रप्रयोगो लिख्यते । इत्यादि ।

End. कृतजप-होम-तर्पणमार्जनदशांशसंख्यया ब्राह्मणभोजनं कारयेत् दक्षिणादिना सन्तोष्य गुरुमभ्यर्च्य वस्त्रालङ्कारैः सन्तोष्य तदाशीर्व्वादं गृहीत्वा यथासुखं विहरेत् श्री । गुरुभ्यो नमः ।

Colophon. इति छत्रयोगोद्भूतदोषशान्तिविधिः समाप्तः ।
श्रीशाके शरपुष्करावनिधरप्रालेयरोचिर्मिते
तिग्मांशौ वृषराशिगे मकरगे जीवे तपर्त्तौ शुचौ ।
शुक्ले ब्रह्मतिथौ शिवर्त्तविलसद्गौरांशुवारेऽकरोत्
सन्नाहीनवलोक्य पद्धतिमिमां श्रीमिश्रवाचस्पतिः ॥

विषयः । छत्रयोगसूचितपूर्व्वजन्मोपार्ज्जिताखिलाघौघक्षयपूर्व्वकरक्तवातराजरोगकासश्वासाद्यखिलरोगोपशमनद्वारा यथोचितशुभफलप्राप्तिकामस्य श्रीनृसिंहयन्त्रपूजनम् । तदङ्गभूतमयुतसंख्यको गोविन्दषोडशाक्षरमनुजपः । सहस्रसंख्यको होमः । शतसंख्यकं तर्पणम् । दशसंख्यकं मार्जनम् । शक्त्यनुसारेण ब्राह्मणभोजनञ्च ।

---

(२५३ ।) जयद्रथयामलम् . 10×3 inches. Folia, 96. Lines, 7 on a page. Extent, 2,520 çlokas. Character, Newārī. Date, Newār Era, 762. Appearance, new. Prose and verse. Incorrect.

Beginning. श्रीगणेशाय नमः । नक्षोगनौनसमुद्भवम् । ?
तत्र प्रभृत्यसौ वीरो यत्र यत्र विचारयेत् ।
सद्दो तत्राप्य वहनं प्रकाशमुपयान्ति हि ॥ ?
अचार्य्यं वहलं हृद्यं नात्र कार्य्या विचारणा ।
वसयाध्वजाविधाने पञ्चम ॥
अथ तं संप्रवक्ष्यामि पातचक्रध्वजाविधिं ।
यन्न कस्यचिदाख्यातं मुक्ता त्वं वीरवन्दिते ॥

तैलिकानां गृहं गत्वा कुम्भकारगृहं तु वा ।
तत्र तत्पतिभिः सार्द्धं यजेत परमेश्वरीम् ॥
वर्त्तुले मण्डले कृष्णो षड्विन्दुप्रविलाञ्छिते ।
सर्व्वयोरोपचारेण यजेत् तत्र महाग्निवास् ॥ इत्यादि ।

End. इह नु कानि कुलार्णवमध्यगानि गदितं त्रिदशेन्द्रविलासिनि ।
ब्रूम विचित्रकलान्तविटृंभितं त्रिदशभेमेदगतं प्रणतं यथा ॥ ?

Colophon. इति श्रीजयद्रथयामले विद्यापीठे सिद्धिलक्ष्मीविधानो नाम कल्पं । सम्वत् ७६२ । वैशाखशुक्लपूर्णमासि ।

विषयः । इति श्रीभैरवस्रोतसि विद्यापीठे शिरच्छेदे जयद्रथयामले चतुर्विंशति-साहस्रके महाकालिकातन्त्रे द्वितीयषट्के एकादशमः (?) पटलः ।
इति॰ द्वितीयषट्के सङ्कर्षणारूपकविधाने द्वितीयः पटलः ।
इति कालसङ्कर्षणाहुंकारखाविधिस्तृतीयः ।
इति कालसङ्कर्षण्यां चर्चिकाविधिश्चतुर्थः ।
कालसङ्कर्षण्यानन्दविधाने पञ्चमः ।
डम्बरकाल्याविधिः षष्ठः ।
इति कालिके यमकल्पो विधिः सप्तमः ।
कालसङ्कर्षण्यां गह्वनेश्वरीविधिरष्टमः ।
„ एकतराविधाने नवमः ।
„ शवशवरीविधिर्दशमः ।
„ वज्रवतीविधिरेकादशः ।
„ रक्ताकालीविधिर्द्वादशः ।
„ इन्दीवरीकालिकाविधिस्त्रयोदशः ।
„ धनदकाल्याविधिश्चतुर्दशः ।
„ रमण्याविधिः पञ्चदशः ।
„ ईशानकालीविधिः षोड़शः ।
„ मन्त्रमाताविधिः सप्तदशः ।
(अष्टादशोनविंशौ न दृष्टौ ।)

कालसङ्कर्षण्यामादितो विंशतितमः ।

,, एकविंशतितमः ।

,, जीवकालीहृदयविधिर्द्वाविंशतितमः पटलः ।

,, सप्ताक्षराहृदयस्त्रयोविंशतितमः ।

,, अरमन्त्रविधिश्चतुर्विंशतितमः ।

इति भैरवस्रोतसि विद्यापीठे शिरश्छेदे जयद्रथयामले चतुर्विंशतिसाहस्र महातन्त्रे द्वितीयषट्के अर्द्धचक्रेश्वरीविधिर्नाम पञ्चविंशतितमं हृदयम् । समाप्तं पञ्चविंशतिहृदयचक्रः सप्तदशमः पटलः ॥

इति जयद्रथयामले महातन्त्रे स्तकर्णिविधिरष्टादशमः ।

,, भैरवडाकिन्या विधिरेकविंशतितमः पटलः ।

,, कालान्तकीविधिर्विंशतितमः ।

,, वीर्य्यकाख्या विधिरेकविंशतितमः पटलः ।

,, महाकालीविधानं नाम द्वाविंशतितमः ।

,, कालसङ्कर्षण्यां सप्तार्णकाख्या विधानं त्रयोविंशतितमः ।

,, कालीहृदयविधानो नाम चतुर्विंशतितमः ।

,, विद्याविद्येश्वरीचक्रे मन्त्रोद्धारः प्रथमः ।

,, ,, ,, मन्त्रवीर्य्यनिर्द्देशो द्वितीयः पटलः ।

,, ,, ,, ध्यानार्चनाधिकारस्तृतीयः पटलः ।

,, ,, ,, प्रथमप्रतिहारविधिरष्टमः ।

,, ,, ,, द्वितीयप्रतिहारविधिर्नवमः ।

,, ,, ,, तृतीय ,, ,, दशमः ।

,, ,, ,, चतुर्थप्रतीहारोसाधनविधिरेकादश ।

,, ,, ,, शिरश्छेदशिवसाधनविधिस्त्रयोदशः ।

,, ,, ,, शिखासाधनविधिश्चतुर्द्दशः ।

,, ,, ,, कवचसाधनाधिकारः पञ्चदशः ।

,, ,, ,, अस्त्रसाधने विद्याविद्येश्वरी चतुर्विंशतिः ।

,, यक्षिणीचक्रे प्रथमः ।

,, ,, पाटलाविधिः ।

,, विद्यापीठे सिद्धिलक्ष्मीविधानो नाम कल्पम् ।

---

(११६७।) जातकपद्धतिव्याख्यानम् . By सूर्य्यदेवसोमयाजिन् . 10×3 inches. Folia, 70. Lines, 11 on a page. Extent, 2,114 çlokas. Character, Newāri. Date, Newār Era, 803. Appearance, fresh. Prose. Generally correct.

**Beginning.** शुभमस्तु । श्रीइष्टदेवतामूर्त्तये नमः । श्रीगुरुभ्यो नमः ।

श्रीसूर्य्यादिसर्व्वग्रहेभ्यो नमः ॥

जगदुदयस्थितिसंहृतिकारणमविकारि सच्चिदानन्दम् ।

श्रीमच्छ्रीकृष्णाख्यं तेजो मे हृदि सदा स्फुरतु ॥

आचार्य्यं श्रीपतिं नत्वा जातके कर्म्मपद्धतिः ।

व्याख्यायते मया स्पष्टं सूर्य्यदेवेन यज्वना ॥

पश्यन्तु तमिमं ग्रन्थं शास्त्रं न्यायोपबृंहितम् ।

पूर्व्वजातकशास्त्राणामलङ्कारं विपश्चितः ॥

इह खलु सन्तः शिष्टाचारसिद्धं – – – – अभीष्टदेवतानमस्कारादिरूपं मङ्गलं कृत्वा ग्रन्थारम्भं प्रतिजानाति देयमपि (?) श्रीपतिराचार्य्योऽभीष्ट देवतानमस्कारपूर्व्वं जातककर्म्मपद्धत्याख्यं ग्रन्थकरणं श्लोकेन प्रतिजानाति।

नत्वा तां गुरुदैवतां त्रिसमयज्ञानोद्भूतेः कारणं

तत्पादाम्बुरुहप्रसादविकसद्बोधो बुधः श्रीपतिः ।

शिष्यप्रार्थनया विचार्य्य सकलान् होराशमार्यान् बहून्

वक्ष्ये जातककर्म्मपद्धतिमहं होराविदां प्रीतये ॥

त्रैकालिकपदार्थविषयज्ञानोत्पत्तेः कारणं गुरुरूपां देवतां प्रसिद्धदेवतां प्रणम्य – – – – करिष्यामीति वाक्यार्थः ॥ इत्यादि ।

**End.** इत्थं निध्रुवगोत्रेण सूर्य्यदेवेन यज्वना ।

कृतं श्रीपतिपद्धत्यां प्रकीर्णफलनिर्णयम् ॥ श्रीइष्टदेवतामूर्त्तये नमः ।

**Colophon.** इति श्रीसूर्य्यदेवसोमयाजिविरचिते श्रीपतिपद्धतिव्याख्याने जातकालङ्कारे प्रकीर्णं फलाध्यायः ॥

सम्वत् ८०३ फाल्गुन शुक्लद्वितीया आदित्यवारे लिखितमिदं राजदैवज्ञपूर्णानन्देन सम्पूर्णोऽयं ग्रन्थः ।

विषयः । श्रीपतिपद्धतेर्व्याख्यानम् ।

(१५७८।) जातकार्णवः. By वराहमिहिर. 12×2½ inches. Folia, 13. Lines, 5 on a page. Extent, 195 çlokas. Character, Newārī. Date, Newār Era, 883. Appearance, fresh. Verse. Incorrect.

Beginning. श्रीसूर्य्याय नमः ।

कल्पाद्यव्दगणः प्रभाकरहतश्चैत्रादिमासैर्युत-

स्त्रिघ्नः खाग्निहृताप्तयुक्युर ११ हृतैर्लब्धाधिमासैर्युतः ।

खत्रिघ्नः षतिथिर्द्विधाश्रियहतस्त्रिव्योमशैलोद्धृते-

र्हीनो लब्धदिनावमैः षितनिशार्द्धे मावनोऽहर्गणः ॥

इत्यादिमध्यार्यं गुणकारानाह । इत्यादि ॥

End. अथ मध्याङ्गिकोच्छायानयनम् ।

दिनेश्वरार्मैरधिकं यदल्पं रसैन पंक्त्या निहितं शराप्तम् ।

पलप्रभायां वियुतं युतश्च छाया तु सा स्यात्तु दिनमध्यभागे ॥

छायानिर्व्यिप्रादिनमध्यभागे छायानिता दिक्षु हिता तयाप्ते ।

दिनेश्वरघ्ने दिनमध्यनाड़ो श्रीमान् वराहो वदति स्वयन्नया ॥ (?)

Colophon. इति श्रीवराहमिहिरविरचिते जातकार्णवे त्रिप्रश्नाधिकारस्तृतीयः समाप्तः ॥ सम्वत् ८८३ चैत्रशुक्ल ४ लिखितसम्पूर्णमिति । शुभम् ॥

विषयः । इति० ग्रहमध्याधिकारः प्रथमः ।

इति० ग्रहस्फुटाधिकारो द्वितीयः ।

इति० त्रिप्रश्नाधिकारस्तृतीयः ।

---

(२)१०६।) जैमिनिसूत्रव्याख्या (सुबोधिनी) By नीलकण्ठ. 10×4 inches. Folia, 45. Lines, 10 on a page. Extent, 1,069 çlokas. Character, Nāgara. Date, (?). Appearance, fresh. Prose. Incorrect.

Beginning. श्रीगणेशाय नमः । श्रीगुरवे नमः । ॐ नमो भगवते वागीश्वराय ।

सृष्टिस्थित्यन्तकर्त्री हरिहरविधिभिः सेवितानन्ददात्री

नानातन्त्रोक्तमार्गैर्मुनिभिरपि – –भालचन्द्रोज्वलाङ्गी ।

आरक्ताभा त्रिनेत्रा शिवशयनिलया राजराजेश्वरी सा

वाचं नो ह्यातनोतु प्रतिपदकठिने जैमिनेः सूत्रबंधे ॥

विवस्वद्दंशाग्रप्रावनिपतिधरश्रीरघुलो-
दयाम्भोधेर्वाचा + + + + जैमिनिमुनेः ।
निरालम्बे शास्त्रे जननि गिरिजे याप्यति न किं
— — — — — — — — — ॥

अथ प्राक्तनकर्म्मानुप्रियकार्णैवाघादिना जगदुद्धारं चिकीर्षुः करुणासिन्धुर्जैमिनिमुनिः ... ग्रन्थप्रतिबन्धकोपशमनाय श्रीशङ्करप्रभृतिपूर्व्वं ....जातकशास्त्रमनुष्ठातुं प्रतिजानीते । इत्यादि ॥

End. सिद्धमन्यत् — अन्यत् प्रकृतं ग्रन्थानुक्तं सिद्धं शास्त्रान्तरप्रसिद्धं ग्राह्यमित्यर्थः ॥

Colophon. इति श्रीनीलकण्ठज्योतिर्विद्विरचितायां जैमिनिसूत्रव्याख्यायां सुबोधिन्यां द्वितीयाध्यायस्य चतुर्थः पादः ॥

---

(१२४०।) ध्यानतिलकम्. 6×4 inches. Folia, 6. Lines, 7 on a page. Extent, 52 çlokas. Character, Nāgara. Date, (?). Appearance, fresh. Verse. Incorrect.

Beginning. श्रीगणेशाय नमः ।
नारद उवाच ।
भूतानां च — — — ध्यानं येन च लभ्यते ।
एवं ध्यानं न जानामि पुनर्जन्म न विद्यते ॥
श्रीभगवानुवाच ।
शरीरं + विद्यानां शरीरं सर्व्वदेवता ।
शरीरं सर्व्वतीर्थानि गुरुभक्तिषु लभ्यते ॥
.. .. .. .. .. .. ..
गुरुकृपाप्रसादेन ब्रह्मविष्णुमहेश्वरम् ।
सामर्थं तत्प्रसादेन केवलं गुरुसेवया ॥ इत्यादि ।

End. विष्णुस्थाने कृतं पापं शिवस्थानेषु मुच्यते ।
शिवस्थाने कृतं पापं गुरुस्थानेषु मुच्यते ॥
गुरुस्थाने कृतं पापं वज्रलेपो भविष्यति ।
ते नरा नरके यान्ति यावच्चन्द्रो दिवाकरः ॥

Colophon. इति श्रीविष्णुनारदसंवादे ध्यानतिलकं नाम सम्पूर्णम् ॥

---

(१०६।) भट्टारकवीरतन्त्रे चण्डकापालिन्याः संक्षेपपूजाविधिः. 12×5 inches. Folia, 25. Lines, 9 on a page. Extent, 675 çlokas. Character, Newāri. Date, (?). Appearance, fresh. Verse. Generally correct.

Beginning. ॐ सिद्धिकालिकायै।

सप्तखाराक्षरां देवीं चन्द्रिकोपरि संस्थिताम्।

नमामि शिरसा भक्त्या भैरवीं भैरवासनां॥

अथ प्रातःकृत्यम्। उत्थाय गुरुं नमस्कृत्य स्नात्वा तत्र गायत्रीं दशधा जपेत्॥ इत्यादि।

End. ततः पूजास्थानं गोमयेनोपलिप्य स्वेच्छया विहरेत्।

Colophon. इति श्रीभट्टारकवीरमहातन्त्रे अष्टषाष्टिकायां श्रीचण्डकापालिन्याः संक्षेपपूजाविधिः।

---

(२)३२६।) टोडरानन्दः (वैद्यकः) (खण्डितान्तः). 16×4 inches. Folia, 101. Lines, 9 on a page. Extent, 3,636 çlokas. Character, Newāri. Date, (?). Appearance, fresh. Verse. Incorrect.

Beginning. श्रीगणेशाय नमः।

शिवं प्रणम्य वागीशं धन्वन्तरिमथाश्विनौ।

क्रियते टोडरानन्दं ग्रन्थं सद्वैद्यसम्मतम्॥

दिशन्तु शं पोशवशङ्कराद्या देवाः सुदेवाव्ययसम्भवाद्याः।

श्रीटोडरेन्द्रनृपतौ – – – – – धर्म्मस्य भूमौ परिरक्षको च॥

– – – – कुन्तिसुतादिभि र्या पूर्व्वं कृता पद्धति – – – –।

मूर्द्धाभिषिक्तालिकभूषणेन समुद्धृता श्रीवरटोडरेण॥

भूदेवदेवान् भुवि दानयज्ञैः सन्तोष्य साधूनथ सर्व्ववर्णान्।

कामैरनेकैश्च विलोक्य + + नाथापयेद्दिग्विजये नरेन्द्रः॥

प्राचीनशास्त्राणि सुदुर्गमाणि भिन्नप्रमेयाणि निरीक्ष्य सम्यक्।

एकत्र सर्व्वन्तु भवान् सुबोद्धुं मतं कृते टोडरमल्लभूपैः॥

श्रीटोडरो नृपवरो रसालङ्कारसम्भृतः।

गृहीतदेहो लोकस्य रक्षार्थमिति मे मतिः॥

साधूनां रक्षता नूनमसाधूनां विमर्द्दनः ।
तदाज्ञया सुश्रुतादिसारमुद्धृत्य सादरम् ॥
निबध्यते हितं सर्व्वं विशदाक्षरनिर्म्मलम् ।
ग्रन्थेऽस्मिन् टोडरानन्दे सर्व्वार्थपरिबृंहिते ॥

इह खलु चतुर्व्वर्गस्य साधनं शरीरं तच्चायुष्या — — तद्विकारकारिणो रोगास्तदभावहेतुचिकित्सा — — — — — — — आयुर्व्वेदशास्त्रप्रवृत्ति-स्तत्रस्थानामविदुर्व्वोधतया इदानीं — — — — सुकरोपायेन ज्ञानार्थ-मेतत् । तस्मिन् ग्रन्थे प्रयत्नः ॥ इत्यादि ।

**End.**
यस्य यस्य फलस्येह वीर्य्यं भवति यादृशम् ।
तस्य तस्यैव वीर्य्येण — — — मपि दृश्यते ॥
व्याधितं कृमिपुष्टञ्च — — — — मकालजम् ।
वर्ज्जनीयं फलं सर्व्वं मपर्य्यागतमेव च ॥
इति फलवर्गः ।
(अतः परं खण्डितम् ।)

विषयः । इति श्रीमहाराजाधिराजटोडरमल्लविरचिते टोडरानन्दे आयुर्व्वेदसौख्ये आयुर्व्वेदप्रयोजने अष्टचिकित्सालक्षणवैद्यप्रतिरूपिकवैद्यलक्षणदीक्षा रोग-लक्षणकथनं नाम प्रथमप्रहर्षः ।
इति० दोषपञ्चात्मक-दोषस्थानकर्म्म-अविकृतदोषलक्षण-विकृतदोषोप-चयगतिहेतु — — पञ्चमदोषावस्थादोषवेदनादोषधातुक्षयलक्षणभेषज-परीक्षादेशलक्षणनानाप्रकृतिलक्षणं नाम द्वितीयप्रहर्षः ।
इति० पञ्चात्मकद्रव्यलक्षणादिप्रपञ्चद्रव्योदाहरणसवीर्य्यविपाकप्रभावलक्ष-णऋतुचर्य्या वलसाम्यपरीक्षाकथनम् । ३ ।

---

(११६७ ।) टोडरानन्दः वा हीरासुखः By टोडरमल्ल. 11×4 inches. Folia, 102. Lines, 9 on a page. Extent, 1,836 çlokas. Character, Nāgara. Date, Samvat, 1639. Appearance, tolerable. Verse. Generally correct.

**Beginning.** श्रीगणेशाय नमः । विघ्नच्छिदे नमः ।
प्रणम्य गणनायकं सकलसम्पदां दायकं
विरिञ्चिहरिशङ्करानखिलशङ्करान् भक्तितः ।

ग्रहाननघविग्रहान् गिरमथो शुभाशीर्गिरं
करोति नृपटोडरो विविधसौख्यदं जातकम् ॥
श्रीमद्गुरुवशिष्ठभृगुगर्गपराशराद्यै-
र्धर्मप्रवर्त्तनपरैर्यदभाषि पूर्व्वं ।
पश्चाद् वराहमिहिरादिसुरावतारै-
स्तद्गुर्म्मैश्चर्म्मैदमिदं क्रियते सुशास्त्रम् ॥
श्रद्धो सुरगणैरिदं विविधयुक्तियुक्तं कृतं
तदुक्तममनेकधा तदवतारिगोत्रामरैः ।
तदुक्तिरससागरं समवगाह्य सम्यक् ध्रुवे
तदुत्तमपदार्थवल्लुलितशौरिकं शास्त्रकम् ॥
भूयो जातकसंहिता विरचिता श्रीमद्वराहादिभि-
स्तासां सारमशेषमेकत इत स्थातुं ममैयोद्यमः ।
तद् याचे बहुधा बुधा वरतरं स्याद्येदिदं तुष्यतां
नोचेत् तत्कृपया विचिन्त्य सुदृढं— — —लिख्यताम् ॥
अथाद्य जातकस्य प्रयोजनमाह । इत्यादि ॥

End. प्रव्राजकानां कथितास्तु योगा नक्षत्रमूर्त्तेः फलयुक्तमस्मात् ।
सूर्य्यादितो राशिफलानि दृष्टिफलानि संक्षिप्य निरूपितानि ॥
भावाश्रयं फलमतोऽपि विचार एषा
मप्याश्रयोत्थफलमुक्तमनिष्टयोगाः ।
स्त्रीजातकं निधनमप्यथ नष्टजन्म-
द्रेक्काणरूपमिति शौरिकसौख्यमुक्तं ॥

Colophon. इति श्रीमन्महाराजाधिराज-श्रीटोडरमल्लविरचिते श्रीटोडरानन्दे ज्योतिः-शास्त्रे शौरासौख्यं सम्पूर्णमिति । शुभं भवतु । कल्याणमस्तु लेखक-पाठकयोः । संवत् १६३९ वर्षे वैशाख शुदि—प्रतिपदायां शुभे प्रोहित रामात्मजेन देवदत्तेन अलीलिखत् ॥ सम्पूर्णं शुभं भवतु ॥
श्रीटोडरानन्द जय ।

विषयः । इति० राशिप्रभेदः प्रथमो हर्षः ।
खचरयोनिबलाबलसंज्ञकः । २ ।

मिश्रकाध्यायः । ३ ।
कारकाध्यायः । ४ ।
निषेकाध्यायः । ६ ।
सूतिकाध्यायः । ७ ।
अरिष्टाध्यायः । ८ ।
अरिष्टभङ्गाध्यायः । ९ ।
आयुर्दायाध्यायः ।
अष्टकवर्गसौख्यम् ।
कर्म्माजीवसौख्यम् ।
राजयोगसौख्यम् ।
नाभसयोगनिरूपणम् ।
चन्द्रसूर्य्ययोगौ ।
द्विग्रहयोगः ।
प्रव्रज्याध्यायः ।
नक्षत्रगुणसौख्यम् ।
राशिफलसौख्यम् ।
भावफलनिरूपणम् ।
भावविचारः ।
अनिष्टयोगाध्यायः ।
स्त्रीजातकाध्यायः ।
निर्याणविचारः ।
नष्टजातकाध्यायः ।
द्रेक्काणरूपाध्यायः ।

---

(१२९४ ।) तिथ्यादिनिर्णयः By पद्मनाभ. $12 \times 3\frac{1}{2}$ inches. Folia, 52. Lines, 7 on a page. Extent, 1,001 çlokas. Character, Nāgara. Date, Newār Era, 827. Appearance, fresh. Prose and verse. Generally correct.

**Beginning.** श्रीगणेशाय नमः ।

नमस्कृत्य महादेवं गुरुं संसारसागरम् ।
तिथ्यादीनां विवेकार्थं मुनिवाक्यं समुच्चितम् ॥

पक्षवृद्धौ तिथि + + द्दासवृद्धिषु संशयम् ।
सुधियामप्यनुष्ठानमतो मया विविच्यते ॥
त्रिंशद्दिनैस्तु सावनो मासः । उक्तं ब्रह्मसिद्धान्ते ॥ इत्यादि ।

End. श्राद्यश्राद्धमकृत्वैव वृषोत्सर्गो विधीयते ।
वृषोत्सर्गे कृते पश्चात् कुर्य्यादेकादशं ततः ॥
सन्देहानेकगम्भीरं शोकतरङ्गसङ्कुलम् ।
पद्मनाभेन कथितं प्रेतकर्म्म महार्णवम् ॥
दशक्रियामुपक्रम्य श्रावसथ्यं समापितम् ।
प्रेताशौचं तथा ख्यातं मुनीनां दर्शनादिकम् ॥
श्रीवाराणस्यामुपाध्यायश्रीपद्मनाभेन विरचितम् ॥

Colophon. इति तिथ्यादिनिर्णये योगीश्वरसंग्रहे प्रेतकृत्यनिर्णये पद्मनाभसंग्रहयोः समुच्चयः समाप्तः । (?) नेपाल सम्वत् ८२० श्रावणकृष्णत्रयोदश्यां तिथौ समाप्तिया पुस्तीति । श्रेयोऽस्तु सर्व्वदा ।

---

(१२३८ ।) दानप्रदीपः By माधव. 14×3 inches. Folia, 99. Lines, 9 on a page. Extent, 2,669 çlokas. Character, Maithila. Date, (?). Appearance, fresh. Prose and verse. Generally correct.

Beginning. श्रीगणेशाय नमः ।
कार्य्याकार्य्यविभागमूढमनसां संख्यावतां सन्ततं
स्वस्वाभीष्टफलाप्तये स भवतादाम्नायकल्पद्रुमः ।
एकानन्तफले विचित्ररुचयः शाखे यदीये चिरा +
+ + + प्रवरा वरामृतफलप्राप्त्यै समध्यासते ॥
आसीद् गुर्ज्जरदेशमण्डलमणिः सौराज्यनित्योत्सवे
चैवर्णकरणाभिधे पुरवरे श्रीराघवः पार्थिवः ।
त्यागो वाग्बलमाजिसीम्नि कृतिता रूपं च सर्व्वज्ञता
यस्यैतान्यलिखन्नृप – – – – शन्द्रे कलङ्कं क्रमात् ॥
तेन प्राज्ञतमे भुवि प्रथयता प्रीतिं समानायितः
श्रीगर्नीदधि – – – पुरवरात् श्रीवासुदेवः सुधीः ।

विद्यावृत्तगुणैरदीय गणितां यष्टोलकोर्थ्वभिधां
स्वां जातिं विशिशेष भूतनिलयेच्छसंख्यावतः ॥ (?)
तस्य तनूजो नाम्ना नरसिंहोऽभूत्मनीषिनरसिंहः ।
मत्सररहिताः प्राज्ञा यं तु सकूर्चां सरस्वतीं प्राहुः ॥
तस्यात्मजो धौधनहेतुतोऽभू-
न्नाम्नैव धौष – – – यितस्य ।
वृत्तानि यस्य श्रवणोत्सवाय-
वृत्तान्वितानाम – – – बुधानां ॥
तस्यात्मजः पण्डितरामनामा
बभूव भूवल्लभवल्लभोक्तिः ।
– – – – – –
– – – – – – – ॥
तस्यात्मजः पण्डितविष्णुशर्म्मा
निःक्षोभपाण्डित्यनिधिर्बभूव ।
– – – – – – –
– – – – – – – ॥
तस्याप्यस्ति सुतः समस्तविषयालङ्कारभूतिर्गुणैः
सम्पूर्णो भुवि भद्रमाधव इति प्रख्यातनामा सुधीः ।
– – – – – – – – – –
– – – – – – – – – – ॥
स्मृत्युक्ताचारचतुरमनीषेण मनीषिणा ।
दानप्रदीपः क्रियते तेनोपक्रियते सता ॥
श्रुतिविषयगतोऽपि प्राणिनां स्वर्गसंस्था-
नपि निखिलपदार्थान् सुप्रकाशान् करोति ।
दुरिततिमिरभेत्ता यस्तु दानप्रदीप-
स्समभिलषितलब्धौ लब्धवर्णाः श्रयध्वम् ॥
तत्र प्रथमं दानप्रशंसा ॥ इत्यादि ।

End. ॐ अद्य भूतलाधिकरणकराजत्वप्राप्तिकाम इदं नगरं विष्णुदैवतं अमुकगोत्रायेत्यादि दक्षिणा नगरप्रवेशान्तम् ॥

Colophon. इति श्रीमहामहोपाध्याय-पण्डित-श्रीविष्णुसूनुभट्टश्रीमाधवविरचितायां दानप्रदीपे भूमिदानप्रकरणं समाप्तम् ॥ अथ तिलदानम् । तत्र यमः । (अतः परं खण्डितम् ॥)

---

(२)११०।) दुर्गार्चनकल्पतरुः By लक्ष्मीपतिशर्म्मा. 12×4 inches. Folia, 60. Lines, 9 on a page. Extent, 1,755 çlokas. Character, Nāgara. Date, (?). Appearance, fresh. Prose and verse. Incorrect.

Beginning. स्वस्ति श्रीगणेशाय नमः ।

सच्चिदानन्दरूपाय साक्षीभूताय कर्म्मणाम् ।
लिङ्गत्रयविशिष्टाय नमोऽनन्तैकमूर्त्तये ॥
अद्वितीयमजं शुद्धं द्विधा इत्यपिवानिशम् ।
बहुधा यद्व वेदगीतं तस्मै कस्मै नमोनमः ॥
श्रीमच्छ्रीकृष्णपादाम्बुजयुगभजनासादितानेकविद्या-
शौर्य्यौदार्य्याद्युपेतक्षितिपकुलमणिः सत्प्रतिज्ञः समालः ।
वीरः श्रीकृष्णवर्म्मा रिपुलनरारोविशोषायतीर्णः
सल्लुगणेशोऽस्क्लिष्टविबुधजनपरित्राणसन्तर्पितार्थः ॥ (?)
तत्पुत्रोऽद्धितदर्पदावदहनज्वालाकरालप्रभः
सद्विद्याव्रतनिष्ठविप्रजनहृत्तोषेन्दुतुल्यच्छविः ।
स्वेष्टिश्राचरणाम्बुजस्मरणभृङ्गायामसर्व्वोन्नतिः
स्वस्ति श्रीरणभीमसाह-युवराट् वर्वर्त्ति लोकेऽधुना ॥
.. .. .. .. .. .. ..
.. .. .. .. .. .. .. ।
दोर्द्दण्डस्यविकुण्डलीकृतधनुर्ज्यानिर्गताच्छाशुगा-
स्तारिः श्रीरघुनाथसाह-नवराट् यस्यात्मजः शोभते ॥
तदाज्ञयेषार्ज्जुनशक्तिपूजा
विधेर्विधानं व्रतकाम्य – – – ।
चिरन्तनोक्तिं प्रणिधाय चित्ते
करोति लक्ष्मीपतिदैवविद् द्विजः ॥

श्रुतिकोटिद्वयाभ्यासालोकनिर्णयमिश्रतः ।
कर्म्माकर्म्मविकर्म्मेति शास्त्रेऽनेकमतं मतम् ॥
.. .. .. .. .. .. ..

अथ कलिजनानां कलिप्रोढ़ाविर्भावितया ...... निगमागमश्रुति-पुराणस्मृत्युपयुक्ताखिलविषयं विद्वानामुपकारायानवरतेप्सितफलदनव-रात्रव्रताङ्गभूताखिलकर्म्मानुष्ठानोपयोगि-दुर्गार्चनकल्पतरुं शास्त्रगुरुक्ति-युक्तिभिः प्रकटीकरोमि ॥ इत्यादि ।

End. इति दशमीकृत्यम् ।
चौर्यं चीनं विचिन्वन् जनप(ति) विषयं कामरूपं विधुन्वन्
अङ्गान् (वङ्गान्) कलिङ्गान् कुरुमरुयवनान् त्रासयन् स्वप्रतापैः ।
स्वर्देवान् भूमिदेवान् सुकुलजनपदान् तोषयन् यज्ञदानैः
श्रीमद्गोर्खाचलेशो जयति रणबहादूरसाहक्षितीन्द्रः ॥
तद्राजत्सदसि ब्रह्मागमविदोऽनेके स्थितास्तेष्वपि
त्रिस्कन्धागमसारतत्त्वनिपुणं — — — तुष्टो नृपः ।
श्रीदेवज्ञशिरोमणीति पदवीं प्रादादसाधारणीं
यस्मै सोऽयमनन्तचिन्मयमना दैवज्ञलक्ष्मीपतिः ॥
त्रिस्कन्धागमशब्दसांख्यनिगमानेकार्थसारामृता-
स्वादाद्याप्तमहाप्रमोदनकज्ञानप्रबोधोदयः ।
कृष्णानन्द इति प्रणीतमहिमस्तत्पुत्रलक्ष्मीपतिः
श्रीदुर्गार्चनकल्पवृक्षममलं भक्त्याकरोच्छारदम् ॥
पक्षे रूपघने पदेभ्य दिवसे द्विघ्ने तिथौ तत्समे
कर्णी मासि यमोत तद्व्यघनमिते मासैकयुक्ते घने ।
कार्णभे त्रिघने युतावखिलयुग्दन्तघ्नविश्वोनके
शाके पंक्तिमितैः समैर्विलसिता ग्रन्थाध्वगात् पूर्णताम् ॥ (?)

इति श्रीदेवज्ञशिरोमणिश्रीमल्लक्ष्मीपतिशर्म्मणा विरचिते दुर्गार्चनकल्प-तरौ दशमीकृत्यकुसुमं दशमम् ॥

विषयः । इति० व्यवस्थाकुसुमं प्रथमम् ।
,, पाठार्चनादिनिर्णयकुसुमम् । २ ।

इति० प्रतिपत्कृत्यकुसुमम् । ३ ।
„ द्वितीयादिपञ्चम्यन्तकृत्येन्दुदर्शन — — दार्चकुसुमम् । ४ ।
„ विल्वाभिमन्त्रणपत्रीप्रवेशकृत्यकुसुमम् । ५ ।
„ अष्टमीकृत्यकुसुमम् । ६ ।
„ बलिदानकुसुमम् । ७ ।
„ कन्यार्चनतत्त्वदत्तकुसुमम् । ८ ।
„ नवमीकृत्यकुसुमम् । ९ ।
„ दशमीकृत्यकुसुमम् । १० ।

---

(१०८९ ।) धनञ्जयनिघण्टुः. 8×3½ inches. Folia, 15. Lines, 8 on a page. Extent, 240 çlokas. Character, Nāgara. Date, Saṃvat 1654. Appearance, old. Verse. Generally correct.

Beginning. प्रथमपत्रं नास्ति। अतो द्वितीयपत्रस्य प्रारम्भवाक्यं लिखितम् । यथा,—

अथ राजनाम ।

राजाधिपः पतिः स्वामी नाथः परिवृढः प्रभुः ।
ईश्वरो विभुरीशानो भर्त्तेन्द्र इन ईशिताः ॥

वृक्षनाम ।

अनोकहस्तरुः शाखी विटपी फलिनो नगाः ।
द्रुमोऽधिपः फलेग्राही पादपो गोवनस्पतिः ॥ इत्यादि ।

End. सिद्धः सिद्धनिषद्या ? सर्हत्सिद्धक्रियामपि ।
अर्हत्सिद्धमिति द्वावप्यर्हत्सिद्धाभिधानको ॥ २४६ ॥
आर्हदानपि तान् प्राहुः अरत्नोत्तममङ्गलम् ॥

Colophon. इति श्रीधनञ्जयस्य कृतौ निघण्टसमये शब्दसंकीर्णनिरूपणो नाम द्वितीयः परिच्छेदः ।

समाप्तो धनञ्जयको संवत् १६५४ । आषाढशुदि १३ भृगुवासरे लिखितमिदं विराटभट्टात्मजेन नरहरिभट्टेन । शुभमस्तु शुभं भूयात् ।

यादृशं पुस्तकं दृष्ट्वा तादृशं लिखितं मया ।
यदि शुद्धमशुद्धो वा मम दोषो न दीयते ॥

---

(५५७ ।) धनुर्वेदः. 6 × 3½ inches. Folia, 49. Lines, 5 on a page. Extent, 245 çlokas. Character, Nâgara. Date, (?). Appearance, fresh. Verse. Generally correct.

**Beginning.** श्रीगणेशगौर्भ्यां नमः ।

लम्बोदरं महाकायं लम्बोष्ठं गजकर्णकम् ।
विघ्नघ्नं पार्व्वतीपुत्रं नमामि गणनायकम् ॥
विना शस्त्रधरं नान्यो धनुर्वेदस्य पारगः ।
अतः स्वप्ने निशि प्राप्ते शिवतत्त्वविचारणम् ॥

कर्त्तव्यमिति शेषः ।

अतः सन्देहदोलायां रोपणीयस्व मानसम् ।
ग्रन्थेऽस्मिंश्चापचतुरैर्वीरचिन्तामणौ क्वचित् ॥
यस्याभ्यासप्रसादेन निष्पद्यन्ते धनुर्द्धराः ।
जेतारः परसैन्यस्य तस्याभ्यासो विधीयताम् ॥
एकोऽपि यत्र नगरे प्रसिद्धः स्याद्धनुर्द्धरः ।
ततो यान्त्यरयो दूरं मृगाः सिंहगृहादिव ॥

इति धनुर्द्धरप्रशंसा ॥ इत्यादि ।

**End.** जीवे लक्ष्मीर्मृते स्वर्गः कीर्त्तिश्च धरणीतले ।
तस्माद्धैर्य्यं विधातव्यं हन्तव्या परवाहिनी ॥

इति युद्धविधिः ।

**Colophon.** इति श्रीमहाशिवप्रोक्तो धनुर्वेदः समाप्तः ॥

**विषयः ।** धनुर्द्धरप्रशंसा । धनुर्द्धारणविधिः । धनुःप्रमाणम् । गुणलक्षणम् । फललक्षणम् । पायनविधिः । ? नाराचनालिकालक्षणम् । स्थानानि । गुणमुष्टिलक्षणम् । धनुर्मुष्टिविधानम् । लक्ष्यलक्षणम् । शरलक्षणम् । धनुर्वेदाभ्यासे अनध्यायकालनिरूपणम् । लक्ष्यसञ्चलनविधिः । शीघ्रसाधनम् । दूरपातित्वम् । दृढप्रहारता । हीनगतिः । लक्ष्यचलनगतिः । धनुर्गतयः । बाणभङ्गः । वराटिका । विन्दुकम् । गोलयुग्मम् । शब्दभेदी । शस्त्रवारणम् । संग्रामविधिः । अक्षौहिणीलक्षणम् । व्यूहलक्षणम् । युद्धविधिः ।

---

(२) ८२।) धनुर्वेदप्रकरणम्. (वीरेश्वरीयं) By विक्रमादित्य. 11×4½ inches. Folia, 34. Lines, 7 on a page. Extent, 486 çlokas. Character, Nāgara. Date, (?). Appearance, fresh. Verse. Correct.

Beginning. श्रीगुरवे नमः ।

नमो देवाधिदेवाय शङ्कराय कपर्दिने ।
रामाय जामदग्न्याय नमोऽस्त्वमिततेजसे ॥
प्रणम्य परया भक्त्या देवदेवं पिनाकिनम् ।
धनुर्विधानं वक्ष्यामि वीरेश्वरमतोद्धृतम् ॥
मूर्द्धाभिषिक्तकुलजैः पृथिवीपालनोद्यतैः ।
धनुर्वेदो वेदितव्यस्त्रिवर्गफलमीप्सुभिः।
यस्याभ्यासप्रसादेन निष्पद्यन्ते धनुर्धराः ।
जेतारः परसैन्यानां धनुर्वेदं तदभ्यसेत् ॥ इत्यादि ।

End. सपत्नसैन्याद्व्यानि रक्षयश्चेषु जुह्वता ।
जीवता प्राप्यते कीर्त्तिर्म्मृतेनापि सुराङ्गनाः ॥
तस्माल्लक्ष्मीं यशः स्वर्गं वाञ्छद्भिर्बहुजन्मभिः ।
धनुर्विद्या वेदितव्या जेतव्या वैरिवाहिनी ॥

Colophon. इति श्रीमन्महाराजाधिराजवीरविक्रमादित्यसङ्गृहीते श्रीवीरेश्वरीय-धनुर्वेदप्रकरणे नाम चतुर्थः पादः समाप्तः । शुभमस्तु ॥

विषयः । धनुर्वेदमाहात्म्यम् । वीरेश्वरमतोत्पत्तिः । धनुःप्रमाणम् । गुणलक्षणम् । शरलक्षणम् । नाराचनालीकलक्षणम् । फललक्षणम् । अथ फल-पायनानि । अथ गुणमुष्टयः । अथ धनुर्मुष्टिसन्धानम् । अथ व्यायाः । अथ लक्ष्यम् ।

इति ० प्रथमः पादः ।

अथ दानविधिः । तत्र कालनिर्णयः । शिष्यपरीक्षा । अथाचार्य-लक्षणम् ।

इति ० द्वितीयः पादः ।

अथाभ्यासविधिः । अथ लक्ष्यास्खलनम् । अथ शीघ्रसन्धानम् । अथ दूरपातित्वम् । इति दृढप्रहारिता । इति श्रीनगतयः । इति शुद्ध-

गतयः। इति दृढचतुष्कम्। इति बाणभङ्गः। इति वराटिकावर्त्तः। इति काष्ठभेदनम्। इति विन्दुकम्। इति गोलकयुगप्रभृतिविचित्रविधिः। इति धावल्लक्ष्यम्। इति शब्दभेदित्वम्। अथानध्यायः। पतितमन्त्रः। इति ० तृतीयः पादः।

इति शस्त्ररक्षा। इति शस्त्रवारणम्। अथ तिलकम्। इति दिव्यौषध्यादिप्रभावहरणम्। अथ प्रभावप्रयाणविधिः। इति रक्षामन्त्रः। अथाक्षौहिणी संख्या। अथ शकुननिर्णयः। अथ स्वरबलम्। अथ व्यूहविधिः। अथ युद्धविधिः। इति ० चतुर्थः पादः।

---

(१५००।) धर्म्मतत्त्वप्रकाशः. 9×4 inches. Folia, 267. Lines, 9 on a page. Extent, 4,806 çlokas. Character, Nāgara. Date, (?). Appearance, fresh. Prose and verse. Incorrect.

**Beginning.** श्रीगणेशाय नमः। श्रीसरस्वत्यै नमः। श्रीगुरुभ्यो नमः।
श्रीविश्वेश्वराय नमः॥
वन्देऽहं दक्षिणामूर्त्तिं श्रुतिशिरोगिराम्। ?
प्रहर्त्तुं मूलमज्ञानं ज्ञानमात्मुमभीप्सितम्॥

इह खलु संसारचक्रवंभ्रम्यमाणानां दुर्विषयविविधतापतप्तानां सकलदुःखोपशमाय निरतिशय .. .. .. धर्म्म एव परमोपाय इति तत्रावश्यमाख्यातव्यं पुरुषेण॥ इत्यादि।

**End.** दानप्रश्नस्य कालो निषिद्ध .. .. ..।
सन्नगासधर्म्मा विशेष .. .. द्रष्टव्यम्॥ इति शिवम्।
विख्याते कविकच(चक्र)मध्यवर्त्तिने दो-
दक्षौरे नागमहिम्नि कूर्पराख्यो गोविन्दः।
श्रुति + + सिन्धुपारदृश्वा
श्रीचातुर्धरकुलमण्डलं पुराणी॥ ?
श्रीकण्ठं मनसि विभाव्य नीलकण्ठः
तत् सूनुः श्रितवटकाननं सुरेशम्।
वेदं तैः श्रमनदिशानन + तीनां
व्याख्याने किल चतुराननो बभूव॥

गोविन्दस्तद्वपुर्भूः श्रुतिहृदयमुनिः सर्व्वतन्त्रस्वतन्त्र-
स्तज्ज्ञस्तच्छिक्षितार्थः + + + मकरोद्धर्म्मतत्त्वप्रकाशम् ।
भूपश्रीत्यै शिवाख्ये शयदमिनिमहानैष्ठिकब्रह्मचर्य्ये
वाराणस्याप्तजन्मा सुरसरिदमले श्रीप्रतिष्ठानतीर्थे ॥ (?)
नागाङ्कुरसभूशाके शालिवाहनजे तथे ।
नभस्युषितचतुर्थ्येऽह्नि ग्रन्थोऽयं पूर्णतां गतः ॥

Colophon. इति श्रीमत्-पदवाक्यप्रमाणमर्य्यादाधुरन्धर-चतुर्धरवंशावतंसगोविन्द-
सूरिसूनोः शिवस्य कृतौ धर्म्मतत्त्वप्रकाशः समाप्तिमगमत् ॥
श्री .. सदाशिवार्पणमस्तु ।

विषयः । धर्म्मशास्त्रम् ।

---

(१४१३ ।) धर्म्मसारः. By पुरुषोत्तम. 12×4 inches. Folia, 601. Lines, 9 on a page. Extent, 15,376 çlokas. Character, Nāgara. Date, Saka Era, 1607. Appearance, tolerable. Prose and verse. Generally correct.

Beginning. ॐ श्रीगणेशाय नमः ।

रामं गणपतिं वाणीं नत्वा श्रीमन्मनोहरम् ।
कुरुते पुरुषोत्तमो धर्म्मसारस्य सङ्ग्रहम् ॥
सन्तः शृण्वन्तु मे वाचो यतस्ते चानसूयवः ।
दूषयेरसतः किं मे प्रकृतिस्तस्य सैव हि ॥
अतः साधूनहं वन्दे ते हि वन्द्यास्तथा भुवि ।
असाधूनपि वन्देऽहं तत्स्वभावनिवृत्तये ॥
साधुः सुधां वमत्येव सुधांशुरिव नित्यशः ।
असाधवो विषमुचो भवन्ति फणिनो यथा ॥
नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥
जयति पराशरसूनुः सत्यवतीहृदयनन्दनो व्यासः ।
यस्यास्यकमलगलितं वाङ्मयममृतं जगत् पिबति ॥

श्रद्धाप्रशंसा ब्रह्मवैवर्त्ते ।

गुरौ शास्त्रे च महती श्रद्धा पुरुषैरवाप्यते ।

अश्रद्धया हताशानां कथं साक्षाद्भवेद्धरिः ॥ इत्यादि ।

End. आदित्यपुराणे ।

श्वपचः शकुनः स्वप्नः सामुद्रिकसुपश्रुतिः ।

उपयाचितमादेशात् संभवन्ति कलौ क्वचित् ॥

तस्मात् तन्मात्रलाभेन कलौ कार्य्यं न कारयेत् ॥

शास्त्राणि तावदवलोक्य मया मुनीना-

मर्थः स एव गदितः परमात्मयुक्त्या ।

एवं विलोक्य निखिलं च विचारयन्तः

सन्तः स्वभावसरला मुदमाप्नुवन्तु ॥

पद्मानि बोधयत्यर्कः काव्यानि कुरुते कविः ।

तत्सौरभमनभस्त्वन्तः सन्तस्तन्वन्ति सद्गुणात् ॥

Colophon. इति श्रीज्योतिर्विद्पुरुषोत्तमविरचितो नानापुराण-नानाधर्म्मशास्त्रोक्तो धर्म्मसारः समाप्तः । श्रीशाके १६०१ मासे पतांशगग्रामे लिखितं पुत्रसहितं बलभद्र ओझा शुभम् ॥

---

(११८८।) नक्षत्रसारावली. 10×3 inches. Folia, 14. Lines, 7 on a page. Extent, 490 çlokas. Character, Newārī. Date, (?). Appearance, fresh. Prose and verse. Incorrect.

Beginning. श्रीगणपतये नमः ।

प्रणम्य परमानन्दं सर्व्वकारणकारकम् ॥

सर्व्वाधारमनाधारं सर्व्वज्ञं सर्व्वसाक्षिणम् ॥

अथ नक्षत्रपरिमाणं वक्ष्ये । अश्विनी त्रितारा । अश्वमुखी तिर्य्यङ्मुखी । पीतवर्णा । इत्यादि ॥

End. सावित्र्याष्टोत्तरेण तं हुत्वा – – – – – बलिं दद्यात् । संक्रमे अर्द्धरात्रिः ।

इति नक्षत्रसारावली ।

विषयः । नक्षत्राणां परिमाणकथनम् ।

---

(११६६।) नवरत्नम्, By दामोदरभट्ट. 12×5 inches. Folia, 43. Lines, 11 on a page. Extent, 1,300 çlokas. Character, Nāgara. Date, Saka Era, 1603. Appearance, fresh. Verse. Generally correct.

**Beginning.** ॐ श्रीगणेशाय नमः।

गणेशानं भवानीं च शङ्करं कमलापतिम्।

नत्वा श्रीभास्करं पूज्यान् बाणशून्यनृपे १६०५ मिते॥

शालिवाहशके काम्यामाश्विने पुष्यभे गुरौ।

दशम्यां बहुले पक्षे नातिसंक्षिप्तविस्तृतम्॥

नवरत्नमयं ग्रन्थं नवदीधितिसंयुतम्।

चित्तपावनजातीयो जानकीरघुनाथजः॥

दामोदरो रचयति शिष्यपाठकयोर्मुदे।

शास्त्रदृष्टं लोकदृष्टमनुभूतञ्च कथ्यते॥ इत्यादि।

**End.** ग्रन्थारम्भस्य समये यावद्दृग्गोचरं स्थितम्।

गणितं नवरत्नेन निबद्धं प्रहलाघवात्॥

चित्तपावनजातीयो जानकीरघुनाथजः।

दामोदरो व्यरचयन्माणिक्याद्याद्यदीधितिम्॥

**Colophon.** इति श्रीचित्तपावनजातीय-जानकीरघुनाथात्मज-भट्ट-दामोदरविरचिते नवरत्नाख्ये महानिबन्धे ज्योतिषमाणिक्ये गणितदीधितिः समाप्तः प्रथमः। कशे (शके) १६०१ मार्गशिर वदि अष्टमी मघानक्षत्रे सोमदिने। तस्मिन् दिने राजदैवज्ञपूर्णानन्देन स्वपठनार्थं परोपकारार्थञ्च लिखितम्। नेपाल संवत् ८०६॥

**विषयः।** गणितज्योतिःशास्त्रम्।

दैवज्ञदामोदरनिर्म्मितेऽस्मिन् महानिबन्धे नवरत्नसंज्ञे।

आद्ये मरीचौ श्रुतिलोचनस्य पक्षादिसिद्धिः प्रथमः प्रकाशः॥

दैवज्ञदामोदरनिर्म्मितेऽस्मिन् महानिबन्धे नवरत्नसंज्ञे।

आद्ये मरीचौ श्रुतिलोचनस्य दृक्खेटसिद्धिस्त्वपरः प्रकाशः॥

दैवज्ञदामोदरनिर्म्मितेऽस्मिन् महानिबन्धे नवरत्नसंज्ञे।

आद्ये मरीचौ श्रुतिलोचनस्य त्रिप्रश्ननामा त्रिमितः प्रकाशः॥

दैवज्ञदामोदरनिर्म्मितेऽस्मिन् महानिबन्धे नवरत्नसंज्ञे ।
आद्ये मरीचौ श्रुतिलोचनस्य पर्व्वाभिधो वेदमितः प्रकाशः ॥

इति श्रीचित्तपावनज्ञातीयज्ञानकीरघुनाथात्मजभट्टदामोदरविरचिते नवरत्नाख्ये महानिबन्धे ज्योतिषमाणिक्ये गणितदीधितिप्रकाशः शरसम्मितोऽयम् ॥

इति श्रीचित्तपावनज्ञातीय-ज्ञानकीरघुनाथात्मजभट्टदामोदरविरचिते नवरत्नाख्ये महानिबन्धे ज्योतिषमाणिक्ये गणितदीधितिः समाप्तः ॥

---

(१४६४ ।) नागरसर्व्वस्वटीका. By जगज्ज्योतिमल्ल. 11×5 inches. Folia, 53. Lines, 9 on a page. Extent, 970 çlokas. Character, Newārī. Date, (?). Appearance, fresh. Prose and verse. Generally correct.

Beginning. ॐ नमः श्रीभवानीशङ्कराभ्याम् ।

श्रीजगज्ज्योतिमल्लेन भवानीचरणाम्बुजम् ।
नत्वा नागरसर्व्वस्वटीकेयं परितन्यते ॥
मुहूर्त्तमपि यं स्मरन्नभिमतां मनोहारिणीं
लभेत मदविह्वलां यदिह कामिनीं कामुकः ।
समुल्लसितडम्बरं सुरुचिराङ्गरागाम्बरं
नमामि सुमनःशरं सततमार्थ्यमङ्गश्रियम् ॥

आदौ ग्रन्थकारः कामशास्त्रत्वात् कामदेवं नमस्करोति । इत्यादि ॥

End. जगज्ज्योतिर्म्मल्लभूपो ग्रन्थानेकान् विलोक्य च ।
इयं नागरसर्व्वस्वटीका यत्नेन साधिता ॥

Colophon. इति महाराजाधिराजश्रीश्रीजगज्ज्योतिर्मल्लभूपविरचितायां नागरसर्व्वस्वटीकायामष्टादशः परिच्छेदः समाप्तः ।

विषयः । पद्मश्रीज्ञानविरचितस्य नागरसर्व्वस्वनामककामशास्त्रस्य व्याख्यानम् ॥

---

(१७३ ।) नाट्यशास्त्रम्. 16×4½ inches. Folia, 99. Lines, 7 on a page. Extent, 2,871 çlokas. Character, Newārī. Date, (?). Appearance, tolerable. Verse. Generally correct.

Beginning. ॐ नमो ब्रह्मणे ।

प्रणम्य शिरसा देवौ पितामहमहेश्वरौ ।
नाट्यशास्त्रं प्रवक्ष्यामि ब्रह्मणा यदुदाहृतम् ॥

समाप्तजप्यं व्रतिनं स्वसुतैः परिवारितम् ।
अनध्याये कदाचित्तु भरतं नाट्यकोविदम् ॥
मुनयः पर्य्युपास्यैनं मैत्रेयप्रमुखाः पुरा ।
पप्रच्छुस्ते महात्मानो नाट्यवेदसमुद्भवम् ॥
योऽयं भगवता सम्यग् ग्रथितो वेदसम्मतः ।
नाट्यवेदः कथं ब्रह्मन्नुत्पन्नः कस्य वा कृते ॥
कत्यङ्गः किंप्रमाणश्च प्रयोगश्चास्य कीदृशः ।
सर्व्वमेतद् यथातत्त्वं भगवन् वक्तुमर्हसि ॥ इत्यादि ।

End. आहार्य्याभिनयोह्येष मया प्रोक्तः समासतः ।
अत ऊर्द्ध्वं प्रवक्ष्यामि सामान्याभिनयं पुनः ॥

Colophon. इति भारतीये नाट्यशास्त्रे आहार्य्याभिनयो नामाध्यायः द्वाविंशतिः ।
(अतः परं खण्डितम् ।)

विषयः । इति० भारतीये नाट्यशास्त्रे नाट्योत्पत्तिः । १ ।
इति० प्रेक्षागृहलक्षणम् । २ ।
इति० रङ्गदेवतापूजनम् । ३ ।
इति० ताण्डवलक्षणम् । ४ ।
इति० पूर्व्वरङ्गविधिः । ५ ।
इति० रसविकल्पः । ६ ।
इति० भावव्यञ्जकः । ७ ।
इति० उपाङ्गलक्षणम् । ८ ।
इति० हस्ताध्यायः । ९ ।
इति० अङ्गप्रत्यङ्गलक्षणम् । १० ।
इति० चारीविधानम् । ११ ।
इति० मण्डलविधानम् । १२ ।
इति० गति — — — । १३ ।
इति० कक्षायुक्तिधर्म्मीव्यञ्जकम् । १४ ।
इति० छन्दाभिनयः । १५ ।
इति० छन्दोविधिः । १६ ।

इति० वागभिनये काव्यलक्षणम् । १७ ।

इति० वागभिनये काकुस्वरव्यञ्जकः । १८ ।

इति० दशरूपलक्षणम् । १९ ।

इति० वृत्ताध्यायः । २० ।

इति० वृत्तिविकल्पः । २१ ।

इति० आहार्य्याभिनयः । २२ ।

---

(ड)७६।) नाड़ीपरीक्षा. By रामचन्द्रसोमयाजिन्. Son of सम्राडग्निचित्सूर्य्यदास. 8×3 inches. Folia, 23 Lines, 5 on a page. Extent, 194 çlokas. Character, Nāgara. Date, Saṃvat 1773. Appearance, decaying. Verse. Incorrect.

**Beginning.** श्रीधन्वन्तरये नमः ।

लब्ध्वा प्राक्तनलक्ष्यवर्गंरचितोपायानुपास्य स्फुरत्-
ध्यानैः सद्गुरुभिर्गिरो निगदिताः कृत्वा च भूतिं मुहुः ।
सम्राजोऽग्निचितः सुतः सुकृतिनः श्रीसूर्य्यदासस्य यो
रामो नैमिषमाश्रितः स कुरुते नाड्यादिलक्ष्मोच्चयम् ॥
पाञ्चभौतिकमिदं नृणां वपुः
सप्तधातुमलसङ्घसन्धितम् ।
वातपित्तकफसाम्यशर्म्मभृ-
न्नाड़िरज्जुपरिबद्धमेधते ॥
भूयस्योऽस्मिन् सन्ति नाड्यः शरीरे
स्थूलाः सूक्ष्मास्तास्वयो सप्तशत्यः ।
सख्यार्थ्यंवाप्यास्य वागेरसांश-
तासां हस्ताङ्गौगतिकापरीक्षाः ॥ ? इत्यादि ।

**End.** साध्ये गत्वर इत्युदीर्य्य भिषजो मानाद्दरामौ भरन्
मारां साध्यमधिप्रतापविविधो .. .. चिकित्सन्
नाड्यादेरिति लक्ष्मसूक्ष्ममुदितं श्रीरामचन्द्रेण यत्
तः .. .. .. .. दुर्गमगिरौ – – – – – ॥

एकोनत्रिंशशरमिते + +

+ + विक्रमार्कनृपात् विदितम् ।

प्रकरणमेतत् कविना

रामेण नैमिषारण्ये ॥

Colophon. इतिसम्राड्ग्निचित्सूर्य्यदासात्मजरामचन्द्रसोमयाजिकृतं नाड्यादि-परीक्षाप्रकरणं समाप्तम् । संवत् १७७३ वर्षे जेठ मासे .. .. .. ।

---

(२)७३।) निर्णयार्कः. By श्रीकृष्णराम. 10×4 inches. Folia, 94. Lines, 7 on a page. Extent, 1,316 çlokas. Character, Nāgara. Date, (?). Appearance, fresh. Prose and verse. Generally correct.

Beginning. ॐ नमः श्रीगणेशाय नमः ।

या माया सचराचरं जगदिदं सूते च यद्भौमिभिः

सौन्दर्य्यं प्रतिभाति यत्करुणया सम्भूतिमत् तिष्ठति ।

यस्यामेति लयं लये जलजभूशम्भुरव्यभूतिस्तुता

सा शश्वत्त्रिगुणात्मिका दिशतु नः सन्मङ्गलं मङ्गला ॥

श्रीगोरक्षपराजेन्द्रविक्रमस्यानुशासनात् ।

कृत्यरत्नावलीं कालमाधवं निर्णयामृतम् ॥

निर्णयाब्धयादिकान् ग्रन्थान् समालोक्य प्रयत्नतः ।

श्रीकृष्णरामसिश्रेण निर्णयार्कः प्रकाश्यते ॥

निर्णयं क्रमतो वच्मि वत्सरस्यायनस्य च ।

ऋतोर्मासस्य पक्षस्य तिथ्यादेर्ग्रहणस्य च ॥

चान्द्रसावनसौरेति नाम्ना संवत्सरस्त्रिधा ।

सुजन्मादिव्रते सौरो गोसत्रादिषु सावनः ॥

तिलकादिव्रते चान्द्रो ग्राह्यः संवत्सरो बुधैः ॥ इत्यादि ।

End. सतश्चयादमाह स्मृतौ ।

नित्ये नैमित्तिके जाप्ये होमयज्ञक्रियासु च ।

उपाकर्म्मणि चोत्सर्गे ग्रहवेधो न विद्यते ॥ इति ।

कल्याणं तव राजेन्द्र करोतु कमलालया ।

निर्णये गुणमारोप्य यया विश्वमिदं ततम् ॥

विक्रमार्काद्गुरानन्दगजेन्दुमितवत्सरे ।
ज्येष्ठशुक्लतृतीयायां ग्रन्थोऽयं पूर्णतां गतः ॥

Colophon. इति श्रीगिरिराजचक्रचूडामणिनरनारायणेत्यादिविविधविरुदावली-विराजमानमानोन्नतश्रीमन्महाराजाधिराजश्रीराजेन्द्रविक्रमसाहदेवविरचिते निर्णयार्के एकादशप्रकाशः ॥
शुभम् ॥

---

(११२५।) नीलकण्ठसङ्ग्रहः. By नीलकण्ठ. 14×3 inches. Folia, 88. Lines, 9 on a page. Extent, 2,970 çlokas. Character, Newāri. Date, (?). Appearance, fresh. Prose and verse. Generally correct.

Beginning. ॐ नमो नागेन्द्रभूषणाय ।
श्रीनीलकण्ठपदपङ्कजमप्रमेयं
श्रीनीलकण्ठमतं प्रणिपत्य गेयम् ।
श्रीनीलकण्ठभिषजा क्रियते सुखायं
श्रीनीलकण्ठधरसङ्ग्रहकोगदोयम् ॥ ?
जननी यस्य सावित्री तातो नरहरिः कृती ।
धन्वन्तरिकुलोत्पन्नः श्रीधरो यस्य मातुलः ॥
योऽन्ववाये समाख्यातस्त्रिपुरारिधनस्य च ।
महोपाध्यायवर्य्यस्य सेनाद्य + + नोदितः ॥
सद्वैद्यवृन्दारकवन्दिता ये
द्विजातिवर्य्या गुरवो वदष्याः ।
समस्तु ते + + स्वभावयुक्तं
वचो विचित्रं प्रतिभानुरूपम् ॥
एतैः प्रीत्या भिया सम्यगल्पे हे मयका परम् ।
सज्जनासज्जनावल्पादुपकारापकारिणो ॥
अत्र वाच्या गुणोत्पत्तिर्निदानञ्च रुजां स्थितिः ।
साध्यासाध्यौ चिकित्सा च प्रयोगस्तस्य पत्रिका ॥
भिषजां निर्णयो वाच्यो वेदव्यासप्रयोगतः ।
समासेन सदोसारभिषक्चरणसेविना ॥

न जातु वैरिभिर्दुःखैः पीड्यते हरिरक्षितः ॥

Colophon. इति श्रीमहाराजराजेन्द्रविक्रमसाहविरचिते मन्त्रकल्पद्रुमे पञ्चमाय-
तनपूजाकथनं समाप्तम् ।

यावद् दुर्गाहरिहरविरिञ्चिराश्यो देववर्गा
यावन्मेरुप्रभृतिगिरयो नारदाद्याश्च सिद्धाः ।
यावद् गङ्गा वहति गगने सागरेऽप्यस्ति चाम्बु
तावद्भूम्यः प्रचरतुतरां राजकल्पद्रुमोऽयम् ॥

इति श्रीगिरिराजचक्रचूडामणि .. .. .. .. कान्तिपुरविरोचमान .. ... विक्रमसाहदेवस्य सुतेन महाराजराजेन्द्रविक्रमसाहदेवेन विरचिते राजकल्पद्रुमाभिधाने मन्त्रशास्त्रनिबन्धे चतुर्दशः पूजापटलः ॥

विषयः । इति श्रीमन्महाराजराजेन्द्रविक्रमसाहकृते राजकल्पद्रुमे दीक्षाप्रयोगः प्रथमः पटलः ।

इति ० पुरश्चरणनिर्णयः । २ ।
,, दीक्षाप्रयोगः । ३ ।
,, द्वारपूजादिमातृकान्यासान्तः । ४ ।
,, पीठपूजादिलोकपालान्तपूजाकथनम् । ५ ।
,, अग्निप्रकाशः । ६ ।
,, ७ । ८ ।
,, विष्णुमन्त्रप्रकरणम् । ९ ।
,, शिवमन्त्रादिकथनम् । १० ।
,, ११ ।
,, यजुर्वेदविधानोक्तं धनुर्वेदमन्त्रदीक्षाप्रकरणम् । १२ ।
,, १३ ।
,, पूजापटलः । १४ ।

---

(२) ३२।) राजविधानसारः. By रङ्गनाथसूरि. 12×4 inches. Folia, 30. Lines, 6 on a page. Extent, 360 çlokas. Character, Nāgara. Date, (?). Appearance, fresh. Verse. Generally correct.

**Beginning.** श्रीगणेशाय नमः । श्रीगुरुचरणाभ्यां नमः ।

प्रणम्य गोविन्दपदारविन्दं
देवीं गिरं गौरवमङ्घ्रियुग्मम् ।
लोकद्वयानन्दकरं करोति
गूढ़ाशयं राजविधानसारम् ॥
नानानिबन्धनविलोकनखेदशान्त्यै
संगृह्य धर्म्मनयमूलवचो विभाव्य ।
सायं (?) निपृह्य नृपशिक्षणकौतुकाय
श्रीरत्ननाथकृतिना रचितो निबन्धः ॥
नेपालदेशालिककान्तिपुर्य्यां
गीर्व्वाणयुद्धोत्तरविक्रमस्य ।
राजाधिराजस्य मनःसरोजं
प्रकाशयेद्राजविधानसारः ॥
पूर्णाङ्गो धर्म्मनिष्ठो गुणगणनिपुणः शक्तिसम्पन्नसारी
नानोपायप्रकाराचरणविद्नीतिविज्ञः कलावान् ।
भूपालेन्द्रो विपक्षं तृणमिव लघयन्नीतिचर्य्याकलापै-
र्यावज्जीवं प्रमोदं बहुविततयशो विन्दते स्वर्गमायुः ॥
तस्माद्राजानिशं सर्व्वमङ्गानि परिभावयेत् ।
अभ्यसेद्धर्म्मनीत्यादि शासनं गुरुसेवनात् ॥ इत्यादि ।

**End.** फलानुमेयाः सर्व्वत्र परोक्षगुणवृत्तयः ।
तस्मात् परोक्षवृत्तीनां फलैः कर्म्मोपलक्षयेत् ॥
सुवृत्तो राज्यरक्षादिसमर्थश्च यदात्मजः ।
तदा मन्त्र्यादिसम्मत्या यौवराज्येऽभिषेचयेत् ॥
ख्यातः पण्डितराजरम्यपदवीं यो छद्रिराजेश्वरा-
दासः श्रीरत्ननाथनामविदितो वेदाङ्गशास्त्रोज्ज्वलः ।
भूपानन्दिनि तत्-सुतेन रचिते नीतिप्रबन्धेऽतुले
संपूर्णा नृपधर्म्मबोधनिपुणो देतो विलासः शुभः ॥

**Colophon.** इति श्रीमद्वृविदन्मुकुटमणिमयूखकिरणनिराजितचरण-श्रीपण्डितराज-

व्रजनाथात्मज-श्रीपण्डितराज-रङ्गनाथसूरिविरचिते राजविधानसारे राजधर्म्मकथनो नाम द्वितीयो विलासः । शुभमस्तु समीरणात्मजाः ॥

विषयः । इति ० साङ्गोपाङ्गनिरूपणो नाम प्रथमो विलासः ।

,, राजधर्म्मकथनो नाम द्वितीयो विलासः ।

---

(१४१८ ।) रामायणनाटकम् . By धर्म्मगुप्त. 12×4 inches. Folia, 43. Lines, 9 on a page. Extent, 968 çlokas. Character, Newāri. Date, (?). Appearance, decaying. Prose and verse. Generally correct.

**Beginning.** ॐ नमो नाटेश्वराय ।

नमोऽस्तु सर्व्वदेवेभ्यो द्विजातिभ्यः शुभं तथा ।
जितं सोमेन वै राज्ञा चारोग्यं + + + + + ।
ब्रह्मोत्तरं तथैवास्तु हता ब्रह्मद्विषस्तथा ।
प्रशास्ति मां महाराजः पृथिवीं + ससागराम् ॥
राष्ट्रं पुत्र + + + + + समुद्धिताम् ।
प्रेक्षाकर्त्तुर्महान् धर्म्मो भवतु ब्रह्मभाषितः ॥
काव्यकर्त्तुर्यशश्चास्तु धर्म्मश्चापि प्रवर्द्धताम् ।
इज्यया चानया नित्यं प्रीयन्तां देवता इति ॥
ॐ नमो नृत्यनाथाय ।
ध्यानालङ्कृतलोचनो गिरिसुतावक्त्रं ततः सोत्सुकः
किं तन्मे तपसीति चञ्चलमना आकृष्टचापे स्मरे ।
भ्रूभङ्गाकुलभीषणो दृगनलप्रव्यक्तभीमो हतो
मोहाख्यो रतिशोकसाश्रुवदनः शम्भुश्चिरं पातु वः ॥ (?)

.. .. .. .. .. .. ..

.. .. .. .. .. .. ..

सूत्र । आदिष्टोऽस्मि श्रीमतो भगवतो गोपालेश्वरस्याराधनपरायणेन श्रीशिखरनारायणचरणसेवकेन श्रीभट्टेश्वरीतत्परेण सुरक्तोकुलकमलकाननविकाशनैकभास्करेण – – – – श्रीमता जयपूर्णसिंहदेवेन श्रचास्माकं हरिशङ्कररथयात्रामहोत्सवप्रसङ्गेन नानादिग्देशसमागताः सभा-

सदो वर्त्तन्ते। तत्रभवतः श्रीरामदासहृदयनन्दनस्य परमराजकवेरार्य्य-
श्री + ल-सरस्वतीप्रथितकीर्त्तिमण्डलस्य श्रीमतो धर्म्मगुप्तस्याभिनवकृतं
चतुरङ्करामायणनाटकमभिनयितव्यमिति। इत्यादि।

End. (खण्डितम्।)

---

(१५९२।) रूपावली. By राघवराममिश्र. 10×3 inches. Folia, 16. Lines, 5 on a page. Extent, 240 çlokas. Character. Nāgara. Date, Saka Era, 1714. Appearance, fresh. Prose and verse. Generally correct.

Beginning. श्रीगणेशाय नमः।

प्रणम्यादौ गणपतिं सर्व्वविघ्नविनाशनम्।
शम्भुञ्च परमात्मानं गुरुञ्च सकलार्थदम्॥
देवीं संनम्य शिरसा सर्व्वज्ञानैकदीपिनीम्।
क्रियते राघवेणादिशब्दानां रूपनिर्णयः॥

श्रीमत्साहबहादुरस्य सुमतेर्भूदेवदातुः सदा
नित्योत्साहयुतस्य भूपतिपतेर्वीरस्य नित्यं मुदे।
बालानां मतिवैभवाय हि सुखोपायेन बुद्धेरियं
शुद्धाशुद्धविचारनिर्म्मलधिया धीरैश्च संशोध्यताम्॥

अथाशब्दस्यार्थः। अकारो वासुदेवः। नन्वशब्दो वासुदेववाचक
एतन्मध्ये प्रमाणम्।
अकारो वासुदेवः स्यादाकारस्तु पितामह इति। इत्यादि॥

End. वस्तुतस्त्वेतेषां पुंस्त्वमेव लिङ्गान्तरं तु विशेष्यवाचक इत्यवधेयम्॥

शरण्यो भूपानामवनिसुरसूत्रामविटपी
पटीयान् भूभारोद्वहन इति यस्य प्रतिदिशम्।
प्रसिद्धिः सिद्धा श्रीयुवनृपतिराजस्य भवतात्
मुदे तस्यैकार्थप्रकृतिरिह रूपावलिरियम्॥ (?)

Colophon. इति श्रीमद्राघवराममिश्रविरचिता रूपावली समाप्तिमगात्। श्रीशाके १७१४ श्रीसम्वत् १८४९ श्रावण शुदि १३ रोज रामचन्द्रोपाध्याय-लिखितम्। शुभम्।

विषयः । स्वरवर्णानामर्थभेदनिरूपणम् । अर्थभेदेन तेषां लिङ्गभेदनिरूपणञ्च ॥

---

(८१ ।) ललितार्चनचन्द्रिका. By सच्चिदानन्दनाथ. 8×4 inches. Folia, 140. Lines, 10 on a page. Extent, 4,725 çlokas. Character, Nāgara. Date, (?). Appearance, old. Verse. Generally correct.

Beginning. श्रीगणेशाय नमः ।

अथ ललितार्चनचन्द्रिका लिख्यते ।

श्रियं गुरुं गणाधीशं नत्वा श्रीपरदेवताम् ।

ललितायाः सभेशायाः प्रवक्ष्येऽर्चनचन्द्रिकाम् ॥ इत्यादि ।

End. भविष्यपुराणे ।

विभवे सति यो मोहात् न कुर्य्याद्विधिविस्तरम् ।

न तत्फलमवाप्नोति – – – – – – मानवः ॥

इत्यास्तां विस्तरः ।

सच्चिदानन्दनाथेन महज्ञानन्दचेतसा ।

चन्द्रिकायां प्रणीतायां प्रकाशः + + + शकः ॥

Colophon. इति श्रीसच्चिदानन्दनाथविरचितायां ललितार्चनचन्द्रिकायां नैमित्तिकपूजाधिकारिनिरूपणप्रबोधकं नाम पञ्चविंशः प्रकाशः समाप्तः ।

श्रीसच्चिदानन्दमुनीन्द्रवर्य्यः शिवाप्रसादाधिगता – – – ।

निरस्तसांसारिकमोहजालो नियोगतः श्रीपरदेवतायाः ॥

पीठे जालन्धराख्ये प्रथितकमपालक्तजः प्रार्थितः सन्

शिष्यैः संसारतप्तैः सकलसुखकरीं चन्द्रिकामाततान ।

ख्यातां नाम्नाथ लोकेऽर्चनयुतललितानामयुक्तां बुधा या-

माश्रित्याभ्यर्च्य देवीपदयुगममलं प्राप्नुयुर्धाम नित्यम् ॥

इति श्रीसर्व्वाचार्य्योत्तमोत्तमश्रीमत्सच्चिदानन्दनाथविरचिता ललितार्चनचन्द्रिका समाप्ता । शुभमस्तु ॥

विषयः । इति० प्रातर्निष्क्रमणविधिर्नाम प्रथमः प्रकाशः ।

,, तान्त्रिकस्नानविधिः । २ ।

,, सन्ध्यावन्दनप्रबोधकः । ३ ।

,, सूर्य्यार्घ्यदानप्रबोधकः । ४ ।

इति० द्वारपूजाविधिप्रबोधकः । ५ ।
„ पूजाप्रारम्भप्रबोधकः । ६ ।
„ भूतशुद्धिप्राणप्रतिष्ठाप्रबोधकः । ७ ।
„ मातृकान्यासप्रबोधकः । ८ ।
„ षड्विंशतत्वन्यासप्र धकः । ९ ।
„ १० ।
„ ११ ।
„ श्रीचक्रन्यासप्रबोधकः । १२ ।
„ करशुद्धिप्रबोधकः । १३ ।
„ मूलविद्याप्रबोधकः । १४ ।
„ महाषोढान्यासप्रबोधकः । १५ ।
„ मुद्राविचारणादिप्रबोधकः । १६ ।
„ पात्रास्थापनप्रबोधकः । १७ ।
„ आत्मपूजावृतीयजनपञ्चपतनपूजाप्रबोधकः । १८ ।
„ १९ ।
„ २० ।
„ २१ ।
„ २२ ।
„ २३ ।
„ समयाचारबोधकः । २४ ।
„ नैमित्तिकपूजाधिकारिनिरूपणबोधकः । २५ ।

---

(२)२३४ ।) वाक्यसुधाटीका. By ब्रह्मानन्दभारती. 12×4 inches. Folia, 13. Lines 20 on a page. Extent, 780 çlokas. Character, Nāgara. Date, (?). Appearance, decaying. Prose and verse. Generally correct.

**Beginning.** ॐ श्रीगणेशाय नमः । श्रीदक्षिणामूर्त्तये नमः ।
यस्मात् सर्व्वं समुत्पन्नं चराचरमिदं जगत् ।
इदं नमो नटेशाय तस्मै कारुण्यरूपिणे ॥

कारणं खादि (?) जगतां मारणार्थमनाशयम् ।
वारणाननमात्मानमद्वयं समुपास्महे ॥
.. .. .. .. .. ..
नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ।
मया वाक्यसुधाटीका यथामति विरच्यते ॥
न ख्यातिलाभपूजेच्छा टीकाकरणकारणम् ।
न विद्वत्ताबलं वात्र मुक्तिरेवात्र कारणम् ॥
प्रारिप्सितस्य ग्रन्थस्याविघ्नेन परिसमाप्ति......परमकृपानिधिश्रीभारतीतीर्थगुरुः प्रकरणप्रतिपाद्यमानमर्थं प्रथमश्लोकेन तावद् दर्शयति । रूपं दृश्यं इत्यादि । इत्यादि ।

End. अतएव मोक्षशास्त्रस्यापि साफल्यं स्यादित्ययमेवास्य प्रकरणस्य समस्तवेदान्तशास्त्रस्य च महातात्पर्य्यत्वेन...तस्मात् सर्व्वमनवद्यमिति ।

Colophon. इति श्रीमत्-परमहंसपरिव्राजकाचार्य्य-श्रीमदानन्दभारतीमुनिवर्य्यशिष्य-ब्रह्मानन्दभारतीमतिप्रक्लृप्ता वाक्यसुधाटीका समाप्ता । ... ॥

---

(१३१३ ।) विद्यानदीपिकाविवृतिः. 11×4 inches. Folia, 45. Lines, 9 on a page. Extent, 959 çlokas. Character, Nāgara. Date, (?). Appearance, fresh. Prose. Generally correct.

Beginning. श्रीगणेशाय नमः ।

वन्दे साम्बं सदानन्दमानन्दावरणापहम् ।
तत्त्वावलम्बनार्थाय महादेवं धृताकृतिम् ॥
श्रीमत्भगवत्कृपोल्लसितवेदान्तसिद्धान्तविदाचार्य्यशिरोमणि-श्रीभगवदवतारभगवच्छङ्कराचार्य्यचरणानुग्रहविज्ञातपरापरात्मतत्त्वः श्रीपद्मपादाचार्य्यस्तत्त्वानुसन्धानलक्षणं मङ्गलं शिष्यशिक्षायै कर्त्तव्यतत्प्रकरणोपक्रमे निबध्नाति । ब्रह्मभिरिति ।
ब्रह्मभिः प्रतिपाद्यं यद् ब्रह्मभिर्ब्रह्मसंयुतैः ।
चिन्तितं कर्म्मनिर्मुक्त्यै तद्ब्रह्म हृदि भावये ॥ इत्यादि ।

End. आचार्य्यानुग्रहादेव मूक्ता विज्ञानदीपिका ।
खिद्यपद्मपदाचार्य्यैर्हृत्यास्यामुच्यते कृतिः ॥ (?)
आचार्य्याणां शङ्करादीनां . . . . . . । इति सन्मार्गप्रवर्त्तका आचार्य्याः शब्दार्थानुसन्धानफलं स्वमुखेन स्वशिष्यद्वारा वा निबन्धनान्ते समारोपयन्तीति भावः ।

Colophon. इति श्रीशङ्कराचार्य्यप्रियशिष्ययतीश्वरपद्मपादाचार्य्यविरचितविज्ञानदीपिकाविवृतिः समाप्ता ॥

---

(२)६५।) वीरमित्रोदयः (व्यवहारकाण्डः). By मित्रमिश्र. 21×5 inches. Folia, 363. Lines, 10 on a page. Extent, 10,890 çlokas. Character, Nāgara. Date, Saṃvat 1876. Appearance, fresh. Verse. Generally correct.

Beginning. श्रीगणेशाय नमः । श्रीमद्विश्वनाथगुरुचरणेभ्यो नमः ।

पुरतः प्रविलोक्य भर्गचापं
परतः कामपि कामकार्म्मुकाख्याम् ।
पुलकाञ्चितपीतवाहुदण्डः
कुशलं नः कुरुतात् रघुप्रकाण्डः ॥
स्वस्ति श्रीयुतवीरसिंहनृपतेराज्ञावशाद्युत्सुकः
श्रीमित्राभिधपण्डितः प्रतिदिशं कीर्त्यानिशं मण्डित ।
नानानिर्णयवर्णनव्यसनिनां संख्यावतां प्रीतिदं
संप्राप्तव्यवहारसाधकमिमं कुर्व्वे प्रकाशं परम् ॥

.. ..

.. ..

परिभाषा परिष्कारः प्रमाणानां निरूपणम् ।
विवादपदनिर्द्देशः प्रकीर्णकविवेचनम् ॥
एवं प्रकरणान्यत्र चत्वारि प्रथमे पुनः ।
लक्षणं व्यवहारस्य निरुक्तिर्मुनिभाषिता ॥ ५ ।
व्यवहारस्य भेदाश्च स्वलक्षणविलक्षणाः ।
सामान्यतो विशेषाच्च परिभाषाप्रकाशनम् ।

सामान्यपरिभाषायां धर्माधिकरणे लक्षणम् ॥ ६ ।
दर्शने व्यवहारस्य राज्ञो विधिविवेचनम् ।
प्राड्विवाकस्वरूपञ्च सभापतिसभासदाम् ॥ ७ ।
निरूप च सभ्यानां यथोक्तिकबलाबलम् ।
केषाञ्चित् सभ्यभिन्नानामपि स्थानं सभास्थले ॥ ८ ।
तत् प्रयोजनमादेयानादेयव्यवहारयोः ।
विवेचनमथो कार्य्यं सद्द्रष्टृकसभापतेः ।
प्रतिज्ञोत्तरहेतूनां पदानां चिह्नशालिनाम् ॥ ९ ।
निरूपणमसद्दृष्टावदृष्टौ च सभापतेः ।
सद्द्रष्टृकस्य दोषोक्तिः सम्यक् दृष्टौ फलाभिधा ॥ १० ।
विशेषपरिभाषायां प्रत्यर्थ्योयोगनिर्णयः ।
निह्नवादौ विधिस्तत्र निह्नवादिविवेचनम् ॥ ११ ।
विलम्बोत्तरदानञ्च क्वचिन्नैव विलम्बनम् ।
आद्ये प्रकरणे त्वर्था विविच्यन्ते क्रमादमी ॥ १२ ।
उपोद्घातप्रसङ्गाद्यैरन्येऽपि तदनुव्रताः ।
द्वैतीयीके तु साक्ष्यादिलक्षणं तत्र साक्षिणः ॥ १३ ।
अर्थाक्षिणस्तत्र हेतुः साक्षिप्रश्नविधिस्ततः ।
तत् द्वैधे निर्णयः कोटे(?) साक्ष्ये क्वचिददोषता ॥ १४ ।
निर्णयो लिखितस्याथ तद्भेदास्तत्परीक्षणम् ।
साक्षिणां लिखितस्यापि शब्दत्वेन प्रमाणता ॥ १५ ।
युक्तिर्विशेषणानाख्या अर्थापत्त्यनुमानता ।
लौकिकानां प्रमाणानामभावे दिव्यभावना ॥ १६ ।
दिव्यभेदास्तदावस्था देशकालाधिकारिणः ।
तन्मातृका तद्विशेषविधयो विविधाः क्रमाः ॥ १७ ।
तेषामपि च शब्दोत्थानुमानत्वेन मानता ।
एतेऽर्था विविच्यन्तेऽथो तार्त्तीयीके ततः क्रमात् ॥ १८ ।
व्यवहारपदान्यष्टादशो दिष्टानि लक्षणम् ।
तेषां सामान्यमथ तद्भिदानां विविधा विधाः ॥ १९ ।

एतेऽर्थाः सम्यगुच्यन्ते तुरीये तु प्रकीर्णके।
यन्नोक्तमुपयुक्तं तद्विविच्य प्रतिपाद्यते ॥ २०।
अथ कोऽयं व्यवहारः ॥ इत्यादि ॥

End. एवं धर्मप्रवृत्तस्य राज्ञो दण्डधरस्य च।
यशोऽस्मिन् प्रथते लोके स्वर्गे वासस्तथाक्षयः ॥

Colophon. इति श्रीप्रकीर्णकाख्यं चतुर्थं प्रकरणं समाप्तम्। इति श्रीमत्सकलसामन्तचक्रचूडामणि .. .. महाराजाधिराजप्रतापरुद्रतनूज-श्रीमन्महाराजमधुकरशाहसूनु-श्रीमन्महाराजाधिराज ... श्रीवीरसिंहदेवोद्योजितश्रीहंसपण्डितात्मज-श्रीपरशुराममिश्रसूनु .. .. श्रीमन्मित्रमिश्रकृते वीरमित्रोदयाभिधनिबन्धे व्यवहारप्रकाशः पूर्तिम – – ॥ इति श्रीव्यवहारकाण्डं समाप्तम् ॥ शुभमस्तु। सम्वत् १८०६।

---

(२४१२।) व्यवहारप्रदीपः. By कृष्ण. 13×3 inches. Folia, 14. Lines, 5 on a page. Extent, 210 çlokas. Character, Newārī. Date, (?). Appearance, tolerable. Prose and verse. Generally correct.

Beginning. ॐ नमो देव्यै।
नत्वा शम्भुं सगौरीकं गणाधिपमीश्वरम्।
यत्प्रसादेन + क्षिप्रं वाञ्छितं लभते नरः ॥
व्यवहारप्रदीपोऽयं कृतः कृष्णेन यत्नतः।
कौतुकाय सतां ते तु क्षाम्यन्तु मम धृष्टताम् ॥
ज्योतिषे मन्त्रसारे तु सिद्धान्ते वैद्यके तथा।
अर्थमात्रन्तु गृह्णीयान्नापशब्दं विचारयेत् ॥
अथ प्रथमं ग्रहावस्थानम्।
मासं राशौ वसेत् भानुश्चन्द्रः सार्द्धं दिनद्वयम्।
मङ्गलः सार्द्धमासन्तु मासैकन्तु बुधस्तथा ॥ इत्यादि।

End. अर्कः शौरिः कुजः शौरिः प्रथमस्ताः प्रसूयते।
पितृमातृ तथा भ्राता आत्महा जायते शिशुः ॥ (?)

Colophon. इति व्यवहारप्रदीपपुस्तकं समाप्तम् ॥

विषयः। ग्रहावस्थानम्। ताराचन्द्रगुरुविशुद्धयः। योगानां शुभाशुभम्। ग्रहाणां शुभाशुभकथनम्। कर्णवेध – विद्यारम्भ – चूड़ाकरण – उपनयन – विवाहानां – तिथिनक्षत्रयोगकथनम्। गोधूलिकाव्यवस्था। यात्रानिरूपणम्। ग्रहाणामन्तर्दशानिरूपणम्। पितृमातृस्वजनहननयोगकथनम्॥

---

(१४२०।) शिशुपालवधटीका (निर्णयबृहस्पतिनाम्नी) By बृहस्पति. 14 × 4 inches. Folia, 133. Lines, 10 on a page. Extent, 4,156 çlokas. Character, Newārī. Date, Newār Era, 829. Appearance, fresh. Prose. Generally correct.

**Beginning.** ॐ गणेशाय नमः।

निःशेषवाञ्छितफलार्पणकल्पवल्ली

मोहान्धकारहरणार्कमरीचिमाला।

उद्दामचित्तमृगबन्धनवागुरोत्थे-

रुज्जृम्भतां भगवती मम विष्णुभक्तिः॥

– – – समलकुठारः कृन्तति संसारशाखिनो मूलम्।

सा मम सकलमनिष्टं शमयतु सहसैव वैष्णवी माया॥

यः कैटभारिचरणहृदयपद्मभृङ्गो – – – – – –।

– – – – – – गोविन्द इत्यवनिनिर्जरकुञ्जरोऽभूत्॥

सन्दर्भशुद्धिमधिगम्य गिरां गुरोर्यः

श्रीश्रीधरादिहृतमिश्रपदः – –।

गौड़ाधिपादुपचितप्रवरप्रतिष्ठो

धीमान् बृहस्पतिरितिप्रथिताभिधानः॥

सोऽहं समस्तगुणदोषविचारचारु-

मेतं प्रबोधविषये सुधियां सुबोधम्।

दुर्ब्बोधपद्यशिशुपालवधप्रकाशं

निर्म्मामि निर्णयबृहस्पतिनामधेयम्॥ इत्यादि।

**End.** इति महिन्तापनीयश्रीकविचक्रवर्त्तिबृहस्पतिकृतनिर्णयबृहस्पतिनाम माघटीकायां षष्ठः सर्गः॥

नेपालाब्दे ग्रहकरगजैरङ्किते पौषमासि
शुक्ले पक्षे प्रतिपदि तिथौ वृद्धियोगान्वितायाम् ।
पूर्व्वाषाढ़ायुतगुरुदिने प्रालिखद् ब्रह्मदेवो
भूमीदेवो गुरुसुखमिता माघकाव्यस्य टीका ॥

---

(१५०० ।) शुद्धदीपिका. By दुर्गदत्त. 10×4 inches. Folia, 10. Lines, 9 on a page. Extent, 180 çlokas. Character, Newārī. Date, (?). Appearance, fresh. Prose and verse. Incorrect.

**Beginning.** ॐ नमो ब्रह्मणे नमः ।

नवनीतमिव दध्नः समुद्धृत्य सारमागमात् ।
प्रपञ्चसारे सारोक्त्या गुरूपदेशलेशतः ॥
सन्ध्यावन्दनपूर्व्विका गायत्र्या शुद्धदीपिका । ?
श्रीमता दुर्गदत्तेन क्रियते श्रेयसे सताम् ॥

ततो ब्राह्मे मुहूर्त्ते चोत्थाय शुचिः समाहितः सुधीः प्रातःस्नानादि स्वयाज्ञिक ? प्रोक्तमार्गेणाह्निकं निर्व्वर्त्य चन्दनमृत्तिकादिनोर्द्ध्वपुण्ड्रं विदध्यात् ॥ इत्यादि ।

**End.** अर्घ्यदानेऽञ्जलित्रयप्रक्षेपोऽस्तु आचमनात् प्राक् कर्त्तव्यः । .. .. .. .. उत्तरे शिखरे + + + पूर्व्ववद् विसर्जयेत् ॥

**Colophon.** इति गायत्र्या शुद्धदीपिकायां सन्ध्यावन्दनादिविधिः समाप्तः ॥ शुभमस्तु सर्व्वजगताम् ॥

---

(२)२९९ ।) श्रीमतोत्तरतन्त्रम्. 16×6½ inches. Folia, 263, (leaves 5 to 13 are missing). Lines, 9 on a page. Extent, 6,426 çlokas. Character, Nāgara. Date, Saṃvat 1893. Appearance, fresh. Verse. Incorrect.

**Beginning.** श्रीगुरुगणपतये नमः ।

सर्व्वेषां तत्त्वतो व्यापी तत्वाच्छन्नस्तु मायया ।
माययोत्तरसंलीनो प्रकाशयति भास्करः ॥

श्रीमच्चन्द्रपुरे रम्ये नानारत्नविभूषिते ।
नानाद्रुमलताकीर्णे नानापक्षिगणान्विते ॥
.. .. .. .. .. ..
.. .. .. .. .. ..
दिव्यं मनोहरं रम्यं श्रीमच्चन्द्रपुरं शुभम् ।
समुद्रस्योपकण्ठे तु हेमप्राकारमण्डितम् ॥
योजनायुतविस्तीर्णं नानारत्नोपशोभितम् ।
नानाहर्म्म्यगणाढ्यानि दिव्यानि नानारत्नमयानि च ॥
.. .. .. .. .. ..
तत्र मध्ये रम्या शतयोजनविस्तरा ।
शुद्धस्फटिकसङ्काशा सर्व्वरत्नोपशोभिता ॥
योगिणीगणसेवन्ते नानाकोलाहलै रवैः । ?
चक्रैश्च विविधाकारैर्नानाविहि – – प्सुभिः ॥
.. .. .. .. .. ..
केचित् स्तुवन्ति देवेशं केचित् पठन्ति भाविताः ।
केचित् किलिकिलायन्ते गर्ज्जन्ति चोत्पतन्ति च ॥
क्रीड़न्ति कलकलारावैः परमानन्दनन्दिताः ।
तत्रस्थं भैरवं देवं परमानन्दनिर्भरम् ॥
क्रीड़ाविनोदैरतिलालसस्थं
संहृष्टचित्तात्मनि तत्वयुक्तम् ।
कामैर्विलासैरतिरागवन्तं
तं प्रेक्ष्य देवी प्रणिपत्य सादरात् ॥
प्रोत्फुल्लनयना देवी परानन्दाकुलेक्षणा ।
प्रणिपत्य परा देवी स्तोत्रमेतदुवाच ह ॥

श्रीदेव्युवाच ।

नित्यानन्दं परं शान्तं निष्कलञ्च निरामयम् ।
व्योमातीतं परं शून्यं भैरवं तं नमाम्यहम् ॥

.. .. .. .. .. ..

.. .. .. .. .. ..

एवं देव्या स्तुतं शम्भुं परानन्दाकुलेक्षणम् ।
भैरवो हृष्टमनसा प्रोत्फुल्लकमलाननः ॥
प्रसन्नवरदो देवो वाक्यं चेदमुवाच ह ।
साधु साधु महाभागे तुष्टोऽहं भक्तिवत्सले ॥
पृच्छ पृच्छ यथाकामं यत्ते मनसि वर्त्तते ।
तत् सर्व्वं कथयिष्यामि स्तवेनानेन तोषितः ॥
इति श्रुत्वा शुभं वाक्यं भैरवस्य महात्मनः ।
प्रणिपत्य महादेवी चेदं वचनमब्रवीत् ॥

श्रीकुब्जिकोवाच ।

भ्रामिताहं त्वया नाथ अनेकैः शास्त्रकोटिभिः ।
तन्त्रैश्च विविधाकारैः पश्चश्रोतात्मकैस्तथा ॥
नित्यातन्त्रादिभिश्चैव – – – – – – – – ।
श्रीमतं च न मे ख्यातं भ्रान्ति – – पदे पदे ॥

.. ..

अल्पप्रज्ञात्वहं नाथ ज्ञातुं वक्तुं न शक्नुते ।
गोपितं तु त्वया देव श्रीमतेदं मतोत्तरम् ॥

.. ..

एतत् सर्व्वं समाख्याहि जानीयो निश्चयं यथा ।
कथयस्व प्रसादेन भक्ताहं तव वल्लभा ॥ इत्यादि ।

End. तन्त्रसारमिदं गुह्यं सरहस्यं सुसिद्धिदम् ।
भुक्तिदं मुक्तिदं देवि सर्व्वसंशयहेदकम् ॥

.. .. .. .. .. ..

सर्व्वकामानवाप्नोति सर्व्वसिद्धिफलं लभेत् ।
पूजनात् तन्त्रसारस्य लभते शाश्वतं पदम् ॥
त्रिकोणं मण्डलं कृत्वा तन्त्रसारं प्रपूजयेत् ।
पूजनात् सिद्धिमाप्नोति तुष्यन्ति च मरीचयः ॥

Colophon. इति श्रीमतोत्तरे श्रीकण्ठनाथावतारिते श्रीचन्द्रद्वीपविनिर्गते योगिनीगुह्ये विद्यापीठे श्रीमतसारगर्भनिर्णये श्रीचतुर्विंशतिसाहस्रसंहितायां सारसमुच्चये श्रीमतोत्तरे पञ्चविंशतितमः पटलः समाप्तः ।
संवत् १८९३ ।

विषयः । ... श्रीमतोत्तरमहाम्न्याने प्रथमः पटलः सम्पूर्णम् ।
इति मतोत्तरे श्रीकण्ठनाथावतारिते चन्द्रद्वीपनिर्गते विद्यापीठे योगिनीगुह्ये कुमारिकाखण्डे हिमवत्प्रभुवर्णनं नाम । २ ।
इति० क्षेत्रोपक्षेत्रसन्दोहोत्पत्तिः । ३ ।
,, मातराणां ? प्रतिष्ठालक्षणनिर्णयो नाम । ४ ।
,, ५ ।
,, मालिन्याग(?)चक्रप्रस्तारनिर्णयो नाम । ६ ।
,, ७ ।
,, मुद्राधिकारनिर्णयो नाम । ८ ।
,, श्रङ्गवक्त्रहृद्रूतीनिर्णयो नाम । ९ ।
,, १० ।
,, शिखास्वच्छन्दनिर्णयो नाम । ११ । १२ ।
,, श्राद्धाधिकारो नाम । १३ ।
,, श्लोकद्वादशनिर्णयो नाम । १४ ।
,, देवीचक्रनिर्णयो नाम । १५ ।
,, द्वितीयचक्रनिर्णयो नाम । १६ ।
,, गुह्यमातृचक्रनिर्णयो नाम । १७ ।
,, योगिनीचक्रनिर्णयो नाम । १८ ।
,, कालज्ञानचक्रनिर्णयो नाम । १९ ।
,, २० ।
,, समस्तविद्यानिर्णयो नाम । २१ ।
,, षोढान्यासनिर्णयो नाम । २२ ।
,, क्रोम्मांसं चारलक्षण-श्रङ्गप्रत्यङ्गयोगिनीसञ्चारस्वरसाधनाधिकारो नाम । (?) २३ ।
,, मद्रशताद्धनिर्णयो नाम । २४ ।
,, २५ ।

---

(१४२६ ।) श्लोकसारसङ्ग्रहः. By जगज्ज्योतिर्मल्ल. 10×5 inches. Folia, 87. Lines, 9 on a page. Extent, 1,810 çlokas. Character, Newārī. Date, Newār Era, 808. Appearance, fresh. Verse. Generally correct.

Beginning. ॐ नमः श्रीभवानीशङ्कराभ्याम् ।

एतद् ब्रह्माण्डभाण्डं हरिहरविधयः सन्धरन्तीह सर्व्वं
कीटान् भूपान् समस्तान् तृणमपि सततं तारयन्ते निगर्व्वम् ।
एतेषां त्राणकर्त्त्रीं हरिहरहृदये या वसन्तीह शक्तिः
सा मे कल्याणदात्री भवतु भयहरा चण्डिका सुप्रसन्ना ॥
शिवं कल्याणमुच्यते शक्तिः सामर्थ्यमुच्यते ।
तयोरभेदमावेश शिवशक्तिः प्रयुज्यते ॥

अथ वाराणस्यष्टकम् ॥ इत्यादि ॥

End. नानाकविकृते श्लोके भावार्थो नैव गोचरः ।
गुणदोषौ यदि स्यातां गुणिभिस्तद् विचार्य्यताम् ॥

Colophon. इति श्रीश्रीजगज्ज्योतिर्म्मल्लकृते श्लोकसारसङ्ग्रहे वैराग्यवर्णनायां द्विसप्ततिश्लोकसङ्ग्रहस्त्रयस्त्रिंशत् ॥

याते नेपालिकाब्दे रसयुगमुनिभिः संप्रयुक्तेऽथ माघे
पञ्चम्यां शुक्लपक्षे दिनकरदिवसे पौष्णभे साध्ययोगे ।
भूपानां वन्दनीयः सकलगुणनिधिः श्रीजगज्ज्योतिमल्लो
नानाभेदप्रयत्नाद् रघुकुलतिलको ग्रन्थमेतच्चकार ॥
.. .. .. .. .. .. ..
.. .. .. .. .. .. ..
श्रीश्रीजगज्ज्योतिमहीपमल्लचिन्तामणेर्भक्तपुरे मनोज्ञे ।
आज्ञां समादाय लिलेख पुस्तं दैवज्ञनारायणसिंहनामा ॥

श्रीभवानी प्रीणातु । श्रीश्रीसुमतिजयजितामित्रमल्लदेवसन व्व पुस्तक दरवारयाक चंगलदाम्भगुलिहुकायं तया जुरो ॥ भागिरामपरमानया वेलस ।

संवत् ८०८ श्रावण वदि २३ । शुभमस्तु ॥

———

(२) २२२ ।) सङ्गीतचन्द्र. 14×4 inches. Folia, 215. Lines, 8 on a page. Extent, 5,805 çlokas. Character, Newārī. Date, (?). Appearance, fresh. Prose and verse. Generally correct.

**Beginning.** ॐ भवानीशङ्कराभ्यां नमः ।

नत्वा गुरुं गुरुतरं भरतञ्च नत्वा
नत्वा ततो गुरुतमं गिरिजाधिनाथम् ।
वागीश्वरीं भगवतीं बहुशोऽपि नत्वा
सङ्गीतचन्द्रकरणाय करोमि यत्नम् ॥
विश्वं स्थावरजङ्गमात्मकमिदं यस्याङ्गिकं वाङ्मयं
सर्व्वं वारिकमिन्दुसूर्य्यभगणाद्याहार्य्यमाय्यी जगुः ।
लीलामात्रकृताखिलत्रिभुवनो यः केवलं सात्त्विको
चन्द्रस्वीकृतसव्यभागसुभगो भूयात्स वः श्रेयसे ॥ (?)

(ततो भाषा ।)

अभ्यर्थितः सह सुरैः सुरनायकेन
वेदेभ्य एव यमसृजत नाट्यवेदम् ।
धाता ददौ तमृषये भरताय सोऽपि
लेभे विशेषमथ तण्डुगिरीन्द्रजाभ्यां ॥

(ततो भाषा ।)

तत् ताण्डवाख्यमथ लास्यमिति प्रसिद्धं
सर्व्वं न्यधान्निजसुतेषु तथाप्सरःसु ।
तेभ्यो सुरारिमहिला जगृहुस्तथान्ये
नाट्यं विदग्धजनराजकुमारिकाद्याः ॥

.. ..

एवं परम्पराप्राप्तनाट्यवेदार्थसङ्ग्रहः ।
क्रियते ह्यभिलाषेण विद्वज्जनसेविना ॥

.. .. .. .. .. ..

.. .. .. .. .. ..

निर्म्माणं नाट्यशालाया अस्याः पूजाविधिक्रमः ।
सभापतिस्वरूपञ्च लक्षणञ्च सभासदाम् ॥

सभायाः सन्निवेशश्च पूर्व्वरङ्गार्थवर्णनम् ।
ततश्च पूर्व्वरङ्गाङ्गप्रत्याहारादिवर्णनम् ॥
नान्दीश्लोकप्रपञ्चश्च ध्रुवयोद्दन वर्णनम् ।(?)
ततः प्रवेशः पात्रस्य ततोऽभिनयलक्षणम् ॥
वृत्तिस्वरूपकथनं नृत्यभेदनिरूपणम् ।
अङ्गप्रत्यङ्गयोर्लक्ष्म तथोपाङ्गनिरूपणम् ॥
अङ्गानि च शिरो हस्तौ वक्षः पार्श्वं कटीतटम् ।
चरणौ च तथा स्कन्धौ प्रत्यङ्गानि ततः परम् ॥
ग्रीवा करौ पृष्ठमथोदरमूरू सजङ्घिकौ ।
जानुनी मणिबन्धौ च भूषणानि ततः परम् ॥
दृष्टिस्तारा – –भ्रुश्च नासिका नासिकानिलः ।
कपोलावधरौ दन्ता रसना चिवुकं मुखम् ॥
मुख – –च कथितौ पार्ष्णी गुल्फौ ततः परम् ।
अङ्गुल्यश्च स्तनावेवं ह्युपाङ्गान्यनुक्रमात् ।
प्रचारो हस्तयोश्चैव हस्तयोः करणान्यपि ।
हस्तकर्म्माणि क्षेत्राणि हस्तयोः स्थानकानि च ॥
चार्य्यश्च द्विविधास्तद्वत् करणानि द्विधा पुनः ।
मण्डलानि द्विधा भौमाकाशिकत्वविशेषतः ॥
न्यायाश्चतुर्विधास्तद्वदङ्गहाराः सरेचकाः ।
ततो भावास्तद्विशेषाः स्थायिनश्च ततो रसाः ॥
तत्पोषकाश्च निर्वेदस्तम्भाद्या व्यभिचारिणः ।
अथ प्रकीर्णकं तत्र प्रागुपाध्यायलक्षणम् ॥
आचार्य्यलक्षणञ्चैव प्रमारम्भस्ततः परम् ।
पात्राणां लक्षणं सम्यक् ततः पात्रगुणास्ततः ॥
लक्षोत्तमस्य पात्रस्य पात्रदोषनिरूपणम् ।
पात्रालङ्करणं देशीलास्याङ्गानां प्रकाशनम् ॥
पेरणीलक्षणं पश्चान्नटनर्त्तकलक्षणम् ।
देशीनृत्यक्रमः पश्चात् पेरणीपद्धतिस्ततः ॥

ततश्च गोण्डलीलक्ष्म पर्य्यन्ते गोण्डलीविधिः ।
इति नृत्यप्रकाशेऽस्मिन् अध्याया दर्शिताः क्रमात् ॥
( ततो भाषा । ) इत्यादि ।

End. यथा यथा प्रेक्षकाणां चमत्कारस्तथा तथा ।
रतिमुत्पादयेन्नृत्य इति सङ्गीतसङ्ग्रहः ॥
( ततो भाषा । )
नास्त्येव तत् किमपि यन्न गुणानुविद्धं
तद्दुर्लभं यदिह दोषविवर्जितं स्यात् ।
श्राम्याप्यभिङ्कृह्दयं (?) गणना न किं स्यात्
प्रत्यग्रनिर्म्मितिरसाविति चेन्न दोषः ॥
( ततो भाषा । )
.. .. .. .. .. ..

Colophon. इति सङ्गीतचन्द्रनामा ग्रन्थः समाप्तः ।
सन्ति यद्यपि भूयांसो ग्रन्थाः सङ्गीतगोचराः ।
तथापीदृशमन्यत्तु नास्तीति परिचिन्तयन् ॥
पीयूषहरणं तार्क्षो यत्नाद् विहितवान् यथा ।
तथैतत् पुस्तकं श्लाघ्यं दूराद् दक्षिणदेशतः ॥
आजहार नृपश्रेष्ठः श्रीजगज्ज्योतिरीश्वता ॥
.. .. .. .. .. ..
.. .. .. .. .. ..

---

(२)२२२ ।) सङ्गीतभास्करः. By जगज्ज्योतिर्मल्ल. 14×4 inches. Folia, 192. Lines, 8 on a page. Extent, 5,384 çlokas. Character, Newārī. Date, Newār Era, 751. Appearance, fresh. Prose. Generally correct.

Beginning. श्रीगणेशाय नमः ।
अज्ञानतिमिरदिनकरमानन्दसुधासमुद्रपूर्णेन्दुम् ।
तापत्रयापहरणं वन्दे परदेवताचरणम् ॥
नत्वा गुरूनतिगुरून् कृती जगज्ज्योतिरवनीशः ।
सङ्गीतभास्करममुं कुरुते सुधियं समेत्य यत्नमपि ॥

नाद्यशास्त्रारम्भे निर्विघ्नसमाप्त्यर्थं शिष्टाचारपरम्पराप्राप्तकर्त्तव्यताकमेत-
च्छास्त्रप्रवर्त्तकसमुचितशिवेष्टदेवताकीर्त्तनरूपं मङ्गलमाचरति ग्रन्थकारः
विघ्नमित्यादि । इत्यादि ।

End. श्रीमज्जगज्ज्योतिरधीश्वरस्य निदेशमासाद्य गुणोत्तरस्य ।
सङ्गीतशास्त्रस्य चकार टीकां श्रीमैथिलो वङ्गमणिर्मनीषाम् ॥
सुधियोऽपि हि नन्दन्ति जल्पितैर्बालकल्पितैः ।
तदेष परितोषाय विदुषां मे समुद्यमः ॥
नेपालाब्दे शशिशरमुनिव्याप्तिसे शुक्लपक्षे
.. .. .. .. .. .. ।
.. .. .. .. .. ..
सङ्गीताख्यं समलिखदसौ भास्करं विच्च इन्दुः ॥

विषयः । सङ्गीतचन्द्रनामकसङ्गीतशास्त्रस्य व्याख्यानम् ॥

---

(१४०८ ।) सङ्गीतसारसङ्ग्रहः. By जगज्ज्योतिर्मल्ल. 10×5 inches. Folia, 72. Lines, 9 on a page. Extent, 1,539 çlokas. Character, Newāri. Date, (?). Appearance, fresh. Prose and verse. Generally correct.

Beginning. ॐ भवानीशङ्करगणपतिभ्यो नमः ।
उद्गच्छत्पुलकाङ्कुरः स्मितमुखः सुत्वा लयं मङ्गलं
गौरीलोचनचञ्चलाञ्चलमिलत्तारो विवाहोत्सवे ।
यः पाणिग्रहणच्छलेन कुरुते तस्याः कराकर्षणं
प्रोद्यद्बालसुधाकरः स भगवानस्तु प्रसन्नः सताम् ॥
पताकस्त्रिपताकश्च कर्त्तरीमुख एव च ।
अरालश्चार्द्धचन्द्रश्च कपित्थः कटकामुखः ॥
पद्मकोषः सर्पशिराः सूचिवत् कोलपल्लवः ।
मृगशीर्षो हंसपक्षो हंसास्यो भ्रमरस्तथा ॥
ऊर्णनाभश्च सन्दंशश्चतुरो मुकुलस्तथा ।
ताम्रचूड़ इति प्रोक्ताश्चतुर्विंशति (?) हस्तकाः ॥ इत्यादि ।

End. लक्षपद्यमिति नाटकसूत्रं
यत् कृतन्तु भरतेन तच्छ्रुतम् ।
तत्तु पूर्णमिह नैव दृश्यते
वर्त्तते किमथवा न वा तु यत् ॥
यत् स्वदृष्टमथ यच्छ्रुतं च यद् विप्रदासभरतोदितञ्च यत् ।
व्यासदेवमतमावलोक्य यत् सङ्ग्रहाद् विविधपुस्तकस्य यत् ॥
यत्तु सर्व्वमतसम्मतमेतत् तद् गृहीतमधिकं क्वपि किञ्चित् ।
कल्पना तु न मया कृता यतः किन्तु पद्यपरिवर्त्तनं कृतम् ॥
याते नेपालिकाब्दे रसयुगमुनिभिः संप्रयुक्तेऽथ माघे
पञ्चम्यां शुक्लपक्षे दिनकरदिवसे पौष्णभे साध्ययोगे ।
भूपानां वन्दनीयः सकलगुणनिधिः श्रीजगज्ज्योतिमल्लो
नानाभेदप्रयत्नाद् रघुकुलतिलको ग्रन्थमेतच्चकार ॥
.. .. .. ..
.. .. .. ..
रेखाः पुष्करसंख्यका गुणिजनास्तत्रापि नाहं क्वचित्
सङ्गीते भरतोदितेऽपि विविधे व्यासादिनानामते ।
नानातालनिबन्धबन्धरचितं तत्त्वं न जानाम्यहं
त्वत्पद्मं तव पादसूरकिरणे मग्नं सदा चास्तु मे ॥
लोकानां परिहासस्य शङ्कया न च लज्जया ।
न कामेन न लोभेन भक्त्याहं विनिवेदये ॥
श्रीमच्छ्रीजगज्ज्योतिर्मल्लभूपतितुष्टये ।
सिंहदेवसुतेनायं शिवेन लिखितो मुदा ॥

Colophon. इति सङ्गीतसारसङ्ग्रहपुस्तकं परिपूर्णम् । शुभमस्तु सर्व्वदा ।

---

(२)११२।) संग्रामविधिः. 12×5 inches. Folia, 12. Lines, 5 on a page. Extent, 65 çlokas. Character, Nāgara. Date, (?). Appearance, fresh. Prose and verse. Correct.

Beginning. श्रीगणेशाय नमः । अथ संग्रामविधिः ।
प्रथमं क्रियते स्नानं शुभवस्त्रावृतो भवेत् ।
मङ्गल्यभूतसंयुक्तो देवविप्रान् प्रपूजयेत् ॥

क्षेत्रपालस्य नाम्ना च बलिं दद्याद् दिशो दश ।
शस्त्राणि चापि संपूज्य रक्षामन्त्रं स्मरेन्नरः ॥
शूलेन पाहि नो देवि पाहि खड्गेन चाम्बिके ।
घण्टास्वनेन नः पाहि चापज्यानिःस्वनेन च ॥ इत्यादि ।

End. स एष जीवन् खलु संपरेतो
वर्त्तेत योऽत्यन्तनृशंसितेन ।
देहे मृते तं मनुजाः शपन्ति
गन्ता तमोऽन्धं जनमानिनो ध्रुवम् ॥

Colophon. इति श्रीसंग्रामविधिः समाप्तः ॥

विषयः । इति रक्षामन्त्रः । अथार्जुननामानि । अथ संग्रामविधिः । पत्तिप्रमाणम् । इत्यक्षौहिणीसंख्या । अथ महाक्षौहिणी । अथ व्यूहविधिः ।

---

(८१६ ।) सारसङ्ग्रहः. By इन्दुसेन or इन्द्रसेन. 6×3 inches. Folia, 22. Lines, 5 on a page. Extent, 220 çlokas. Character, Nāgara. Date, Saka Era, 1734. Appearance, fresh. Incorrect.

Beginning. ॐ स्वस्ति श्रीगणेशाय नमः । श्रीसूर्याय नमः ।
श्रीमत्सूर्यं नमस्कृत्य रेवतं (?) तुरगाधिपम् ।
श्रीमतेवेन्द्रसेनेन क्रियते सारसङ्ग्रहः ॥
उद्धृत्य शालिहोत्राणि बालानां + + हेतवे ।
मन्दरेन्द्रेन्दुसेनेन क्रियते सुगमो विधिः ॥
सन्तः शृण्वन्तु मे वाचो यतध्वे चानसूयवः ॥ इत्यादि ।

End. श्रोषध्या एता मया वाहानामनुभूय संप्रसाश ताश्चामहो – –
हुये ॥ ?

Colophon. इति श्रीरूपनारायणेत्यादि-महाराजाधिराज-श्रीम – – – – कृतौ सारसङ्ग्रहशालिहोत्रः समाप्तः । शुभम् । श्रीशाके १७३४ श्रीसंवत् १८४९ आषाढे कृष्णपक्षस्य सप्तम्यां भौमवासरे नक्षत्र २७ योगे ।

विषयः । इति रूपनारायणेत्यादिमहाराजाधिराजश्रीम – – सेनकृतौ सारसङ्ग्रहे अश्वप्रशंसा प्रथमोऽध्यायः ।

इति रूपनारायणेत्यादिमहाराजाधिराजश्रीमदिन्द्रसेनकृतौ सारसङ्ग्रहे अश्वपरीक्षा द्वितीयोऽध्यायः ।

इति ० मन्दरेन्द्रेन्द्रसेनकृतिसारसङ्ग्रहे अशुभावर्त्ता नाम । ३ ।

,, शुभावर्त्ता नाम । ४ ।

,, मन्दवर्णा नाम । ५ ।

,, शुभावस्थो नाम । ६ ।

,, स्वप्नपरीक्षा नाम । ७ ।

,, गन्धपरीक्षा नाम । ८ ।

दन्तपरीक्षा नाम । ९ ।

आयुःपरीक्षा नाम । १० ।

वाहकविधिर्नाम । ११ ।

शिरोवेदनाविधिः । १२ ।

श्लेष्मोपचारः । १३ ।

इति । १४ ।

पित्तप्रचारः । १५ ।

अखडचाड़ी (?) उपचारः । १६ ।

शूलोपचारः । १७ ।

शोथोपचारः । १८ ।

कण्डूपचारः । १९ ।

इति । २० ।

रक्तोपचारः । २१ ।

इति । २२ । २३ । २४ ।

मूत्रविकारः । २५ ।

इति । २६ ।

चकावरी (?) उपचारः । २७ ।

---

(१५३९ ।) सुधातरङ्गिणीतन्त्रम् . (खण्डितान्तम्) By शक्तिवल्लभभट्टाचार्य्य. 10×4 inches. Folia, 16. Lines, 8 on a page. Extent, 288 çlokas. Character, Nāgara. Date, (?). Appearance, fresh. Prose and verse. Generally correct.

Beginning. श्रीगणेशाय नमः ।

गणपतिमभिवन्दे पार्व्वतीनन्दनैकं
मदजलवरधारामत्तरोलम्बगण्डम् ।
गर्व्वितविबुधानां ताण्डवं वेपदण्डं (?)
धवलपरशुवेगे यो हि तं संजहार ॥
कवन्धकर्णकुण्डलोल्लसत्कपोलशालिनीं
कलङ्कहीनचारुचन्द्रखण्डमौलिधारिणीम् ।
प्रणम्य रम्यगम्यकाम्यसाधनाय चिन्मयीं
करोति शक्तिवल्लभो मुदा सुधातरङ्गिणीम् ॥
तन्त्राणां सम्मतिं ज्ञात्वा देशिकानाञ्च सम्मतिम् ।
साधकानां हितार्थाय सङ्ग्रहो विपुलीकृतः ॥

अथ पुरश्चरणजपारम्भात् प्राक् तृतीयदिनकृत्यम् । इत्यादि ।

End. (खण्डितम् ।)

पुष्पिका । इति शक्तिवल्लभभट्टाचार्य्यविरचितायां सुधातरङ्गिण्यां पुरश्चरणजपारम्भदिनप्राक्तृतीयदिनकृत्यकथनं नाम प्रथमः कल्लोलः ।

अथ प्राक्-द्वितीयदिनकृत्यम् ।

---

(१२४६ ।) सूर्य्यार्णवः. 10×3 inches. Folia, 15. Lines, 8 on a page. Extent, 300 çlokas. Character, Newārī. Date, (?). Appearance, fresh. Verse. Incorrect.

Beginning. ॐ श्रीगणेशाय नमः । शशिफलद्वादशमाहात्म्यम् ।

राजोवाच ।

सर्व्वशास्त्रं मया ज्ञातं त्वत्प्रसादाद्धि नारद ।
राशिभेदो मया प्राह मेषराशिफलाफलम् ॥ (?)

नारदोवाच । (?)

यत् त्वया पृष्ठसे राजन् शशिभेदो वदाम्यहम् । (?)
आदौ मेषगुणाः कथ्यास्तवाग्रे च नृपोत्तम ॥ इत्यादि ।

End. धारितं व्रतमेकन्तु रविवारे हरेर्दिने ।
अब्दमेकं प्रकर्त्तव्यं पापनाशो भवेद् ध्रुवम् ॥
चन्द्रजन्मसुखौ कृत्वा पुत्रपौत्रविवर्द्धनम् ।
एवं विधि न कर्त्तव्यं यमजन्म ह्यपुत्रकम् ॥ (?)

Colophon. इति श्रीसूर्य्यार्णवे नारदाम्बरीषसम्वादे कर्म्मविपाके मीनराशिफलं प्रायश्चित्त-द्वादशोऽध्यायः ॥ इति श्रीसूर्य्यार्णवे द्वादशराशिकर्म्मविपाक-सम्पूर्णं शुभम् ॥

विषयः । इति ० मेषराशिफलं प्रायश्चित्तं प्रथमोऽध्यायः ।
,, वृषराशिफलं ,, २ ।
,, मिथुनराशिफलं ,, ३ ।
,, कर्कटराशिफलं ,, ४ ।
,, सिंहराशिफलं ,, ५ ।
,, कन्याराशिफलं ,, ६ ।
,, तुलाराशिफलं ,, ७ ।
,, वृश्चिकराशिफलं ,, ८ ।
,, धनूराशिफलं ,, ९ ।
,, मकरराशिफलं ,, १० ।
,, कुम्भराशिफलं ,, ११ ।
,, मीनराशिफलं ,, १२ ।

---

(१४५३।) सौभाग्यतरङ्गिणी. By मुकुन्द. 16×4 inches. Folia, 30. Lines, 7 on a page. Extent, 980 çlokas. Character, Newārī. Date, (?). Appearance, fresh. Prose and verse. Generally correct.

Beginning. ॐ नमः श्रीमहात्रिपुरसुन्दर्य्यै ।
प्रणम्य चिन्मयीं शक्तिं श्रीमत्-त्रिपुरसुन्दरीम् ।
तोषाय तनुते तस्याः श्रीसौभाग्यतरङ्गिणीम् ॥
इह खलु सर्व्वेषां जन्तूनां सुखं मे भूयात् दुःखं मे माभूदिति सुखो-पादित्साद्दुःखजिहासे भवतः आत्यन्तिकदुःखनिवृत्तिसुखावाप्तौ च

ब्रह्मज्ञानमन्तरेण न भवतः। .. .. .. .. .. । ब्रह्मज्ञानञ्च शक्तिभक्तिमन्तरेण न भवतीति श्रूयते पुराणेषु। तत्र मार्कण्डेयपुराणे;–

स्तुता संपूजिता पुष्पैर्धूपगन्धादिभिस्तथा।

ददाति वित्तं पुत्रांश्च मतिं धर्म्मे तथा शुभां॥

इत्यादि।

End. ततश्च निर्म्माल्यमाघ्राय त्रिपुरचण्डिकायै नमः इत्यैशान्यां क्षिपेत्। ततो भगवतीप्रसादं तद्भ-भक्तेभ्यो दत्वा स्वयमपि प्राश्नीयात्। इति।

Colophon. इति श्रीमुकुन्दविरचितायां सौभाग्यतरङ्गिण्यां चतुर्थी लहरी॥

---

(१४०२।) सौभाग्यरत्नाकरः. By विद्यानन्दनाथ. 10×5 inches. Folia, 389. Lines, 9 on a page. Extent, 8,752 çlokas. Character, Nāgara. Date, Saṃvat 1952. Appearance, fresh. Prose and verse. Generally correct.

Beginning. ॐ नमो भगवत्यै।

प्रारम्भे भरणे भक्तेर्यन्मदस्यन्दबिन्दवः।

कारणानि प्रपद्यन्ते तं वन्दे वारणाननम्॥

सच्चिदानन्दनाथाङ्घ्रिसरोरुहयुगं भजे।

यत् कटाक्षक्षणोत्क्षेपात् शिवोऽहं पञ्चकृत्यकृत्॥

प्रकाशरूपा प्रथमे प्रयाणेऽमृतरूपिणी।

प्रतिप्रयाणे तामन्तः पंडक्यां चित्कलां भजे॥ (?)

आलोक्य सर्व्वतन्त्राणि यामलादीन्यशेषतः।

ज्ञात्वा गुरुमुखात् तेषां रहस्यार्थांश्च तत्त्वतः॥

सच्चिदानन्दनाथाङ्घ्रिसरोजहृदयषट्पदः।

अविद्यानन्दनाथोऽहं वीतरागो विभक्तधीः॥

विचरन् मेदिनीमेतां विद्वद्भिर्विमलात्मभिः।

प्रयागे प्रार्थितः प्रीत्यै तेषां लोकहिताय च॥

पञ्चकोस + योगाधत्तन्मन्त्रमणिसंकुलम्। (?)

समस्तयोगिनीचक्रप्रवालतिलकोज्ज्वलम्॥

नित्यामखण्डलपूर्णेन्दुज्योत्स्नाजालविजृम्भितम् ।
नवचक्रमहादीपं न्यासजालतरङ्गकम् ॥
श्रीनाथपादुकापोतं चतुर्वर्गफलामृतम् ।
प्रकाशयामि सौभाग्ये रत्नाकरमिति स्फुटम् ॥ इत्यादि ॥

End. इत्यन्त्येष्टिविधिः ।
इति गदितमशेषं त्रैपुरं ब्रह्मविद्या-
यजनजपहुतानां शास्त्रदृष्टं विधानम् ।
गुरुचरणसरोजाराधमालभ्यमेत्य
पशुषु परमगोप्यं ईरितं सिद्धसङ्घैः ॥
यथा पित्रोर्मुदे भूयादश्लिष्टमपि भाषितम् ।
बालस्य सद्वतामेतत् तथापि भाषितं मम ॥
त्यक्त्वा कुलं कुलवधू पुरमध्यवीथ्या
गत्वा कुलं मधु निपीय यथेप्सितं या ।
मत्ता परं पुरुषमेत्य तदीयसङ्गात्
तुष्टा पुनः स्वकुलमेति पुनातु सा माम् ॥

Colophon. इति-श्रीविद्यानन्दनाथेन शिवयोः प्रियसूनुना ।
कृतसौभाग्यरत्नाब्धौ षट्त्रिंशो(भू)त् तरङ्गकः ॥
इति श्रीसच्चिदानन्दनाथ-चरणारविन्दद्वन्द्वान्तेवासिना श्रीश्रीविद्यानन्द-
नाथेन कृते सौभाग्यरत्नाकरे षट्त्रिंशत्तरङ्गः । समाप्तम् ।
इति सम्वत् १९५२ सालमितिं । आश्विन कृष्ण ८ रोज ५ तद्दिने
सम्पूर्णम् । शुभम् ।

---

(७६३ ।) हस्तमुक्तावली. By शुभङ्कर. 1 × 3 inches. Folia, 42. Lines, 7 on a page. Extent, 955 çlokas. Character, Bengali. Date, (?). Appearance, fresh. Verse. Generally correct.

Beginning. ॐ नमस्तस्यै ।
गौरि त्वं किमु वेत्सि हस्तकरसं को वेत्ति नो यद्यहं
चेदेवं भण तर्हि किं हृदि न त्वत्तानो च पद्मो त्सभौ ।

भूयोऽन्यं वद कर्त्तरीमुखयुगावेशेन किं स्यादिति
स्मेराननमुखीं हसन् गिरिसुतां चुम्बन् मृडः पातु वः ॥
धीरक्तो गुणसिन्धुदुर्द्धरदरोद्गाढावगाढस्फुर-
ज्ज्योतिर्नाटककामशास्त्रविलसत्सङ्गीतविद्याधरः ।
काव्याम्भोधिकलानिधिर्विमलतासङ्गीतमुक्तावलीम्
सम्मोदाय शुभङ्करो वितनुते श्रीहस्तमुक्तावलीम्
सद्वर्णोज्ज्वलरूपिणी गुणयुता पात्राणि चित्रायिता
नानाभावरसैरिता रतिकरी सौमन्तिनीराजता ।
उन्मीलन्मृदुचारुबन्धरचनालङ्कारकेलिस्थली
कण्ठाश्लेषमियं तनोतु सुधियां श्रीहस्तमुक्तावली ॥
यदि च वै सुचिराद्भिलिख्यते निविड़हस्तक एष कलारसः ।
ननु तदा रसिकाः शशिसन्निभामभिरमन्तु शुभङ्करभारतीम् ॥
अनुष्टुप्छन्दसां बन्धः सन्धेयो द्रुतबोधकृत् ।
हस्तकस्यास्य विषयस्यानयोर्लक्षणस्य च ॥
हस्तकन्तु पताकादि विषयो भवनादिकम् ।
अनयोर्लक्षणं यत्तु वाक्यं चिन्हं तदेतयोः ॥ इत्यादि ।

End. यो यत्राभिनयो योग्यः सोऽनुक्तोऽपि नियुज्यते ।
नृत्ये कराणां शुद्धानां प्रयोगात् तत् फलं भवेत् ॥
उक्तं स्वयं ब्रह्मणैव लिखितं तन्निरूप्यते ।
नर्त्तकानां भवेल्लक्ष्मी निश्चिता सततोज्ज्वला ॥
कीर्त्तिर्दिगन्तविश्रान्ता पुत्रपौत्रे – – – ।
सर्व्वलोकानुरागश्च नृपचित्ते सदा स्थितिः ॥

Colophon. इति शुभङ्करविरचिता हस्तमुक्तावली समाप्ता ।

समाप्तश्चायं ग्रन्थः ॥

विषयः । पताक, हंसास्य, कर्त्तरीमुख, प्रायोमुख, स्थलपद्मक, त्रिपताक, मुष्टिक, शिखर, अर्द्धचन्द्र, सर्पशिरा, सूच्यास्य, खटकामुख, अराल, शुकतुण्ड, संदंशका-कूल, ऊर्णनाभ, कपित्थ, हंसपक्ष, ताम्रचूड़, चतुर, मुकुल, भ्रमर, कदम्ब, कृष्णसार, घोनिक, सिंहास्य, तन्त्रीमुख, गजदन्त,

कपोत, स्वस्तिक, मकर, पुष्पपुट, शेखबन्ध, लता, वद्योमण्डली, पार्श्वमण्डली, ऊर्द्धमण्डली, करिहस्त, पद्मकोष, प्रभृतिभिः प्रकारैः तेनस्य प्रकारभेदकथनम् ॥

---

(१२८१।) हस्तमुक्तावलीसारसमुद्धृतिका. By घनश्याम. 12×3 inches. Folia, 263. Lines, 6 on a page. Extent, 4,950 çlokas. Character, Newāri. Date, Newār Era, 795. Appearance, fresh. Prose. Generally correct.

**Beginning.** ॐ नमस्तस्यै ।

यं देवं श्रुतिनासिकाविरहितं ब्रह्मादयो देवता
ध्यायन्ति प्रतिवासरं न च पुनः संयाति नेत्रातिथिम् ।
कैशोरं समुपास्य नन्दगृहिणीगेहेषु तिष्ठन् सदा
— — —नववल्लवीचरणयो मूर्च्छन् पतन् पातु वः ॥
सूर्य्यान्वये सूर्य्यइवाविरासीत् श्रीमान् जगज्ज्योतिरिति प्रसिद्धः ।
शास्त्रार्थसङ्गीतकलाविदग्धो नाट्याम्बुधौ श्रीरजनीकरश्च ॥
तस्मात्प्रजाभूत् खलु पार्व्वतीव नाम्नाच रुक्मिरुचितिशीलहृद्या ।
सासूयत श्रीमदनन्तनाम शर्व्वा यथाजायत वै जयन्तः ॥
सङ्गीतकाव्यामृतरागलोभी बेलोकलाकौशलचित्रसेनः ।
श्रीमाननन्तः सुतमोदनाय मुक्तावलीसारसमुद्धृतिश्च ॥ (?)
श्रीमाननन्तस्य नियोगवशेन मुक्तावलीसारसमुद्धृतिश्च ।
व्याख्या मतं श्रीभरतादिकस्य शुभङ्करस्यापि करोमि यत्नात् ॥
विघ्नविघाताय मङ्गलं कुर्व्वनाह । मोदाय हर्षाय तनुते कथं भूतां हस्तमुक्तावलीं विमलतासङ्गीतमुक्तावलीं कथम्भूतः काव्याम्भोधिकलानिधिः पुनः कथम्भूतः गुणसिन्धुदुर्द्धरतरोद्गाढावगाढस्फुरज्ज्योतिर्नाटकक्षामशास्त्रविलसत्सङ्गीतविद्याधरः पुनः कथम्भूतः धीरक्तः बुद्धानुरक्तः । इत्यादि ॥

**End.** यः नरः प्रयोगं कुर्य्यात् यः वा ह्यधीयीत पठति या गतिः वेदविदुषां वैदिकानां याज्ञिकानां यज्वनां यागतिः दानशीलानां त्यागशीलानां तां गतिं सनृत्यज्ञः प्राप्नुयात् ॥

Colophon. इति हस्तमुक्तावलीसारसमुद्धृतिकायां श्रीघनश्यामविरचितायां समाप्तोऽयं हस्तप्रकरणः ।
श्रीरस्तु । बाणनन्दपर्व्वतवर्षे — — ॥ नेपाल सम्वत् ७९५ । — — ॥

विषयः । हस्तमुक्तावल्या व्याख्यानम् ।

---

(३)१०८ ।) होरापद्धतिकल्पवल्ली (सटीका). By विट्ठल. 10×4 inches. Folia, 11. Lines, 18 on a page. Extent, 742 çlokas. Character, Nāgara. Date, (?). Appearance, old. Prose and verse. Generally correct.

Beginning. गौरीश्च गौरीपतिमादरेण गौरीसुतश्च प्रणिधाय चित्ते ।
तोषाय होराविदुषां करोति श्रीविट्ठलः पद्धतिकल्पवल्लीम् ॥
नानायन्त्रैर्जन्मकालं विदित्वा तत्कालीनान् स्पष्टखेटांश्च कृत्वा ।
लग्नं कार्य्यं स्पोदयैस्तत्र रीत्या तत्षट्युक्तं कामिनीमन्दिरं स्यात् ॥
इत्यादि ।

टीकायाः B. ग्रम्बजकुलं विकसति. . यदुपासनाद्व विदुषा ।
दिनकर. . वन्देहं तं देवं तिमिरनाशकम् ॥
(स्पष्टं) विद्याकरतनूजेन सद्ज्योतिर्विदा विदा ।
पद्धतेः कल्पवल्लराश्च प्रतानं क्रियते मृदु ॥
ग्रन्थादौ शिष्टाचारप्राप्तं विघ्नध्वंसफलकं मङ्गलमाचरति । गौरीमिति ॥ इत्यादि ।

End. कृष्णात्रिगोत्रे सुतरां पवित्रे पवित्रकर्म्मार्जनि. . शर्म्मा ॥
तत्सूनुना विट्ठलदीक्षितेन चक्रे लघुः पद्धतिकल्पवल्लीम् ॥

टीकायाः । E. शरीरभाजां प्राणिनां शुभाशुभं भाव्यमिति । श्रीनारायणाय नमः ॥
इति श्री । होरापथे हौरिकपान्थवृन्द-
श्रमच्छिदे विट्ठलरोपितायाम् ।
समुल्लसत्-पद्धतिकल्पवल्लर्यां
दशाद्यमाद्यं कुसुमं समाप्तम् ॥

---

# INDEX I.

## TITLES OF MSS.



## अ।

## आ ।



## इ ।



## उ ।



## ए ।



## क ।

## ज।



## झ।



## ट।



## त।

| | नामानि । | पत्राङ्कानि । | विवृतानां विवरणपत्राङ्कानि च । |
|---|---|---|---|
| १३७ । | ताराहस्यवृत्तिका ( झ । ) | ३१ | |
| १३८ । | तिङ्भेदः ( छ । ) ... ... | ८३, ९० | |
| १३९ । | तिथ्यादिनिर्णयः ... ... | ... | ... ... १८४ |
| १४० । | त्रिपुरसुन्दरीप्रातःस्तोत्रम् ( ख । ) | ५४ | |
| १४१ । | त्रिपुराकवचम् ( घ । ) ... | ५४ | |
| १४२ । | त्रिपुराजपहोमविधिः ( ङ । ) | ८६ | |
| १४३ । | त्रिपुरास्तवः ( ग । ) ... | ५४ | |
| १४४ । | त्रिपुरास्नानादिनित्यकर्म्मविधिः ( च । ) | ७४ | |
| १४५ । | त्वरितास्तोत्रम् ( क । ) ... | ८ | |

## द ।

| | | | |
|---|---|---|---|
| १४६ । | दशकर्म्म ( क । ) ... | ३८ | |
| १४७ । | दशकर्म्मपद्धतिः ( छ । ग । च । ञ । ) | ३१, ६५, ७५, ८७ | |
| १४८ । | दशकर्म्मविधिः ( घ । ) ... | ८० | |
| १४९ । | दशक्रियाविधिः ( ख । क । ) | ३२, ४८ | |
| १५० । | दशरूपकालङ्कारः ( क । ) ... | १२ | |
| १५१ । | दानधर्म्मः ( ख । ) ... | ४८ | |
| १५२ । | दानप्रदीपः ... ... | ... | ... ... १८५ |
| १५३ । | दानवाक्यसमुच्चयः ( क । ) ... | ७४ | ... ... १०५ |
| १५४ । | दानवाक्यावली ( ग । ख । ) | २५, ४५ | |
| १५५ । | दिव्यावदानम् ( क । ) ... | ८९ | |
| १५६ । | दीक्षाविधिः ( घ । ) ... | १९ | |
| १५७ । | दुर्गार्चनकल्पतरुः ... ... | ... | ... ... १८७ |
| १५८ । | दुर्घटवृत्तिः ( ग । ) ... | १७ | ... ... १०५ |
| १५९ । | देवामृतपञ्चरात्रम् ( ग । ) ... | ३४ | ... ... १०६ |
| १६० । | देविकासाधनम् ( क । ) ... | ७ | |
| १६१ । | देवीकवचम् ( ग । ) ... | ५५ | |

| नामानि । | पत्राङ्कानि । विस्तार्यां विवरणपत्राङ्कानि च । | |
|---|---|---|
| १८३ । नागरकसर्वस्वटीका ... | ... ... ... | १९५ |
| १८४ । नागानन्दनाटकम् ( ञ । ) ... | ७३ | |
| १८५ । नाट्यशास्त्रम् ... ... | ... ... ... | १९६ |
| १८६ । नाड़ीपरीक्षा ... ... | ... ... ... | १९८ |
| १८७ । नारदीयधर्मशास्त्रम् ( ञ । ) | ४४ | |
| १८८ । नारसिंहपुराणम् ( ज । ) ... | २९ | |
| १८९ । नित्यनैमित्तिकविधिः ( घ । ) | १८ | |
| १९० । नित्यातन्त्रम् ( ग । ) ... | ८ | |
| १९१ । नित्याह्निकतिलकम् ( क । ग । ) | ४५,४७ | १११ |
| १९२ । निदानम् ( च । )... ... | ७० | |
| १९३ । निर्णयार्कः ... ... | ... ... ... | १९९ |
| १९४ । निश्वासतत्वसंहिता ... | १० ... ... | १३७ |
| १९५ । निश्वासाख्यमहातन्त्रम् ... | ११ | |
| १९६ । निष्पन्नयोगावली ( क । ) ... | ३४ | |
| १९७ । नीलकण्ठसंग्रहः ... ... | ... ... ... | २०० |
| १९८ । नीलकण्ठस्तवः ( ङ । ) ... | ४६ | |
| १९९ । नृत्येश्वरतन्त्रम् ... ... | ... ... ... | २०१ |
| २०० । नृसिंहसुन्दरीकवचम् ... | ... ... ... | २०२ |
| २०१ । नैषधचरितम् ( ङ ) ... | १२, ८७ | |
| २०२ । न्यायकुसुमाञ्जलिः ( ग । ) ... | १३ | |
| २०३ । न्यायभाष्यम् (वात्स्यायनीयम्)(ख । ) | २२ | |
| २०४ । न्यायरत्नाकरः ( क । ) ... | ३० ... ... | ११३ |
| २०५ । न्यायवार्त्तिकतात्पर्य्यटीका (ख । ङ । ) | ४८, ४९ | |

## प ।

| | | |
|---|---|---|
| २०६ । पक्षतन्त्रम् ... ... | ६ | |
| २०७ । पक्षपञ्चाशि ( ङ । ) ... | ८२ | |
| २०८ । पक्षरक्षा ( ज । च । ) ... | ६, २१, ३६ | |

| | नामानि । | पत्राङ्कानि । | विवृतानां विवरणपत्राङ्कानि च । |
|---|---|---|---|
| २०९ । | पदसूर्य्यव्याकरणम् ( घ । ) ... | १३ ... ... | ११४ |
| २१० । | पद्यसमुच्चयः ... ... | ... ... ... | २०२ |
| २११ । | पराशरस्मृतिः ( प । ) ... | ५९ | |
| २१२ । | पशुपतिपुराणम् ... ... | ... ... ... | २०३ |
| २१३ । | पाण्डवविजयः ( ख । ) ... | १९ ... ... | ११५ |
| २१४ । | पातसारणीटीका ... | ... ... ... | २०५ |
| २१५ । | पारमेश्वरीमततन्त्रम् ( घ । ) | ८५ | |
| २१६ । | पार्व्वणश्राद्धविधिः ( ङ । ) ... | २० | |
| २१७ । | पीठपूजाविधिः ... ... | १७ | |
| २१८ । | पुरश्चरणचन्द्रिका ( ट । ) ... | ५० | |
| २१९ । | पुरश्चर्य्यार्णवः ... ... | ... ... ... | २०५ |
| २२० । | पुरुषपरीक्षा ( त । ) ... | ४७ | |
| २२१ । | पुरुषसूक्तम् ( घ । ) ... | ४२ | |
| २२२ । | पुण्यचिन्तामणिः ... ... | ... ... ... | २०७ |
| २२३ । | पूजाविधिः ( ग । ) ... | ३९ | |
| २२४ । | पूर्व्वाम्नायतन्त्रम् ... ... | ... ... ... | २०८ |
| २२५ । | पौर्णमासीव्रतकथा ( ङ । ) ... | २६ | |
| २२६ । | प्रक्रियाकौमुदी ( ञ । ) ... | ३१ | |
| २२७ । | प्रतिष्ठातत्वम् ( घ । ख । ) ... | ६५, ६९ | |
| २२८ । | प्रतिष्ठातन्त्रम् ( क । ठ । ) ... | २, ४५, ६२ ... | ११६ |
| २२९ । | प्रतिष्ठापद्धतिः ( झ । ) ... | ७७ | |
| २३० । | प्रतिष्ठासारसङ्ग्रहः ( ठ । ) ... ... | ७८ | |
| २३१ । | प्रपञ्चसारतन्त्रम् ( ढ । ) ... | ७९ ... ... | ११७ |
| २३२ । | प्रबोधचन्द्रोदयनाटकम् ( छ । ) | ६४ | |
| २३३ । | प्रबोधचन्द्रोदयनाटकटीका ( ङ । ) | ३३ ... ... | ११८ |
| २३४ । | प्रशस्तिरत्नम् ... ... | ... ... ... | २०९ |
| २३५ । | प्रश्नोत्तररत्नमालिका ( ग । ) | ३८ | |

## म।

| | नामानि। | पत्राङ्कानि। | विवृतानां विवरणपत्राङ्कानि च। |
|---|---|---|---|
| २८१। | महालक्ष्मीव्रतम् (झ, ञ।) | ४६ | |
| २८२। | महालक्ष्मीव्रतकथा (त।) ... | ८४ | |
| २८३। | महालक्ष्मीव्रतमाहात्म्यव्याख्यानम् (घ) | २६ | |
| २८४। | महिम्नः स्तोत्रम् ... ... | ... ... ... | २२७ |
| २८५। | माधवानलकथा (च।) ... | ४७ | |
| २८६। | मानवधर्म्मशास्त्रम् (क।) ... | ६० | |
| २८७। | मानवन्यायशास्त्रम् (च।) | ४३ | |
| २८८। | मालतीमाधवनाटकम् (ट। क।) | ५६, ७४ | |
| २८९। | मालिनीस्तुतिः (ग।) ... | ७५ | |
| २९०। | मालिनीस्तोत्रम् (घ।) ... | ८२ | |
| २९१। | मुद्राप्रकाशः (ङ।) ... | ८३ | |
| २९२। | मुद्राराक्षसनाटकम् (ग।) | ८८ | |
| २९३। | मृत्युञ्जयस्तवः (घ।) ... | ६३ | |
| २९४। | मृत्युजिदमृतीशविधानम् वा मृत्युजिदमृतेशतन्त्रम् (ख।) | ११ ... ... | १२५ |
| २९५। | मेघदूतम् (ट। ठ।) ... | ३१, ५६ | |
| २९६। | मेघदूतटीका (ट।) ... | ७८ | |
| २९७। | मेदिनीकोषः (ङ।) ... | ७६ | |
| २९८। | मैथिलब्राह्मणानां कुलपञ्जी (छ।) | ४४ | |
| २९९। | मैथिलब्राह्मणानां वंशावली (ख।) | ८ | |
| ३००। | मोक्षसोपानटीका ... | ... ... ... | २२८ |

## य।

| | | | |
|---|---|---|---|
| ३०१। | यदुवंशकाव्यम् ... ... | ... ... ... | २३२ |
| ३०२। | यवनजातकम् (क।) ... | ४० | |
| ३०३। | युद्धजयार्णवः (छ।) ... | १, ८१ | |
| ३०४। | योगगुह्यम् (छ।) ... | ८ | |
| ३०५। | योगपीठः (ध।) ... | ५९ | |

## ल ।



## व ।

## श।

| | नामानि। | पत्राङ्कानि। | विस्तृतानां विवरणपत्राङ्कानि च। |
|---|---|---|---|
| ३७८। | शक्तिसूत्रम् (घ।) … | १८ | |
| ३७९। | शताधिकाष्टाशीतिपत्राणि (क।) | ९० | |
| ३८०। | शनैश्चरस्तवः (ठ। ग। थ।) | ४६, ४८, ७९ | |
| ३८१। | शान्तिमन्त्राणि (ख।) … | ६३ | |
| ३८२। | शारदातिलकम् (ञ। ख। ढ) | ७४, ८४, ८८ | |
| ३८३। | शारदातिलकटीका … | १२ | |
| ३८४। | शारीरकमीमांसाभाष्यम् (छ।) | ६१ | |
| ३८५। | शिवकवचम् (च।) … | ५४ | |
| ३८६। | शिवधर्म्मः … … | ५५ | … … १२८ |
| ३८७। | शिवधर्म्मसङ्ग्रहः (ख।) … | ९२ | |
| ३८८। | शिवधर्म्मोत्तरम् (क।) … | ९२ | |
| ३८९। | शिवपञ्चाक्षरम् (च।) … | १३ | |
| ३९०। | शिवपुराणम् … … | २५ | |
| ३९१। | शिवरात्रिविधानम् (ञ।)… | ६२ | |
| ३९२। | शिशुपालवधकाव्यम् (ङ। झ) | ५६, ८५ | |
| ३९३। | शिशुपालवधटीका (घ।) | ७२ | |
| ३९४। | शिशुपालवधटीका (निर्णयवृहस्पति-नाम्नी) … … | … | … … २५४ |
| ३९५। | शुद्धदीपिका … … | … | … … १५५ |
| २९६। | शेषधरणीसंवादः (ङ।) … | १३ | |
| २९७। | श्रीकापालेश्वरीभीमादेव्याः पूजापद्धतिः (ङ) … | ७० | |
| ३९८। | श्रीकुब्जिकामतः (कुलालिकाम्नाये) (ङ।) … | ८ | |
| ३९९। | श्रीदत्तपद्धतिः (ग।) … | ४५ | … … १७९ |
| ४००। | श्रीपतिपद्धतिव्याख्यानम् (ङ।) | १८ | |

| | नामानि । | पत्राङ्कानि । | विवृतानां विवरणपत्राङ्कानि च |
|---|---|---|---|
| ४०१ । | श्रीमतोत्तरम् ( ग । ) ... | २२ | |
| ४०२ । | श्रीमतोत्तरतन्त्रम् ... | ... | ... ... २५५ |
| ४०३ । | श्रीमत्पद्धतिः ( ट । ) ... | ६७ | |
| ४०४ । | श्रुतबोधः ( च । ) ... | ३१ | |
| ४०५ । | श्लोकसङ्ग्रहः ( ख । ) ... | ७४ | |
| ४०६ । | श्लोकसारसङ्ग्रहः ... ... | ... | ... ... २५८ |

## ष ।

| | | | |
|---|---|---|---|
| ४०७ । | षट्कारकम् ( च । ) ... | ३७ | |
| ४०८ । | षट्साहस्रम् ( घ । ) ... | ५३ | |
| ४०९ । | षट्साहस्रिका ( कुलालिकाम्नायान्तर्गता ) ( ग । ) | ११ | |

## स ।

| | | | |
|---|---|---|---|
| ४१० । | संवत्सरप्रदीपः ( ख । ) ... | ६० | |
| ४११ । | संहितापाठः ( ख । घ । ट । ) | १०, २३, ३३ | |
| ४१२ । | सङ्गीतचन्द्रः ... ... | ... | ... ... २६० |
| ४१३ । | सङ्गीतभास्करः । ... ... | ... | ... ... २६२ |
| ४१४ । | सङ्गीतसर्व्वस्वम् ( ज । ) ... | ६७ | |
| ४१५ । | सङ्गीतसारसङ्ग्रहः ... | .. | ... ... २६३ |
| ४१६ । | सङ्ग्रामविधिः ... ... | ... | ... ... २६४ |
| ५१७ । | सत्त्वबाधाप्रशमनम् ( ज । ) ... | ८३ | |
| ४१८ । | सन्ध्याविधिः ( ड । ) ... | ४५ | |
| ४१९ । | सप्तमीव्रतकथा ( ञ । ) ... | ८४ | |
| ४२० । | सरोजकलिका ( ठ । ) ... | ३३ | |
| ४२१ । | सर्व्वज्ञानोत्तरतन्त्रम् ( ख । ) | ८५ | |
| ४२२ । | सहृदयहृदयावलोकः ... | १५ | |

| नामानि । | पत्राङ्कानि । | विस्तृतानां विवरणपत्राङ्कानि च । |
|---|---|---|
| ४४८ । हरिमेखला ( ग । ) ... | ३६ | |
| ४४९ । हरिवंशम् ( ख । ) ... | १५, २५ | |
| ४५० । हरिवंशटीका ( ग । ) ... | २९ | |
| ४५१ । हरिहरस्तोत्रम् ( क । ) ... | ५६ | |
| ४५२ । हस्तमुक्तावली ... ... | ... ... ... | २७० |
| ४५३ । हस्तमुक्तावलीसारसमुद्धृतिका | ... ... ... | २७२ |
| ४५४ । हितोपदेशः ( ख । ञ । ) ... | ७२, ७५ | |
| ४५५ । होरापद्धतिकल्पवल्ली ... | ... ... ... | २७३ |
| ४५६ । होराशास्त्रम् ( क । ) ... | ४१ | |
| ४५७ । होरामुखः ... ... | ... ... ... | १८२ |

# INDEX No. II.

## GENERAL INDEX.



### अ ।



### आ ।



### इ ।

ई।

## ख।

ट ।

## ड।



## त।



## द।

## भ।



## म।

## ल ।

# व।

## ह ।

1. SKANDAPURĀNA. See cat., p. 141.



2. LAṄKĀVATĀRA.
Part of last leaf.
See cat., p. 140.



3 to 10.
LEAVES OF VAMŚĀVALĪ.

3. B.
(Fo. 23. B.)



3. A.
(Fo. 23. A.)
part of



4.
(Fo. 24. B.)



5.
(Fo. 25. A.)



6.
(Fo. 25. B.)



7.
(Fo. 26. B.)



8.
(Fo. 28. B.)



9.
(Fo. 31. A.)



